ॐ

श्रीरामायनमः ।

श्रीमत्कौशिककुलजलधिकौस्तुभस्य श्रीमदनन्तनारायणशर्मणस्तनयेन

श्रीपार्वतीगर्भशुक्तिमुक्ताफलेन ।



चेन्नपुरिपच्चप्पकलाशालायां संस्कृताध्यापकप्रथमपदा-
द्विरतिसुखमनुभवता ।

श्वेतारण्यनारायणयज्वना रचिताः ।




# सव्याख्या वृत्तालंकाररत्नावली रामस्तुतिः लोकोक्तिसंग्रहः विष्णुनक्षत्रमालाच

श्रीकामकोटिपीठाधिपैः श्रीचन्द्रशेखरेन्द्रसरस्वतीजगद्गुरुभिः

वीक्षिताश्चानुमोदिताश्च ।

चेन्नपुरिविराजमाने

कबीरभिधाने मुद्रायन्त्रे मुद्रिता विजयन्तेतराम्.

१९३१.

ॐ

श्रीरामायनमः ।

श्रीमत्कौशिककुलजलधिकौस्तुभस्य श्रीमदनन्तनारायणशर्मणस्तनयेन
श्रीपार्वतीगर्भशुक्तिमुक्ताफलेन ।

चेन्नपुरीपच्चप्पकलाशालायां संस्कृताध्यापकप्रथमपदा-
द्विरतिसुखमनुभवता ।

श्वेतारण्यनारायणयज्वना रचिताः ।

# सव्याख्या वृत्तालंकाररत्नावली रामस्तुतिः लोकोक्तिसंग्रहः विष्णुनक्षत्रमालाच

श्रीकामकोटिपीठाधिपैः श्रीचन्द्रशेखरेन्द्रसरस्वतीजगद्गुरुभिः
वीक्षिताश्चानुमोदिताश्च ।

I

चेन्नपुरीविराजमाने
कबीरभिधाने मुद्रायन्त्रे मुद्रिता विजयन्तेतराम्.
१९३१.

श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीकामकोटिपीठाभिषिक्तश्रीचन्द्रशेखरेन्द्रसरस्वतीजगद्गुरुवरैर्नारायणस्मरणपूर्वकं प्रियशिष्याय श्वेतारण्यनारायणयज्वने वितीर्णा महत्याज्ञा ।

श्वेतारण्यनारायणयज्वना त्वया विरचिता जगद्गुरुस्तवसुब्रह्मण्यशतकत्रेताग्निस्तुतिप्रमुखा आर्यदेवताभक्तिप्रवर्धकाः नास्तिक्यनिवर्तकाश्च ३० ग्रन्थाः सन्ध्यौपासनब्रह्मयज्ञसूर्यनमस्कारदर्शतर्पणमन्त्रार्थाश्च सव्याख्या वृत्तालंकाररत्नावली रामस्तुतिः लोकोक्तिसंग्रहः विष्णुनक्षत्रमाला चतत्तदुचिताधिकारिलोकोपकाराय मुद्रयित्वा प्रचार्यन्तामिति ॥

By the greatest of Paramahamsa-parivrajaka-acharyas the world,teacher Sri Chandrasekharendra Sarasvati who adorns the Kamakotipitha, has been given, after invoking the blessings of Sri Narayana, to his dear disciple, Svetaranya Narayana Yajwa the following order :—

"By you, Svetaranya Yajwa! should be printed and published, for the benefit of the respective worlds your many works which are as follows? :—30 works like Jagadgurus stava, Subrahmanya-sataka. Tretagni-stuti etc., which are calculated to infuse in the minds of the reader devotion to the Gods and an abhorrence for atheism, explanatory works on subjects like Sandhy, Aupasana, Brahmayajnya, Suryanamaskara, Darsa tarpana etc., a work on literary criticism, *viz.*, Vrittalankararatnavali with commentary and Rama-stuti."

## अलंकारसूच्चिका ।

११२. विशेषकः
११३. उत्तरं
११४. सूक्ष्मं पिहितं
११५. व्याजोक्तिः गूढोक्तिः
११७. विवृतोक्ति युक्तिः
११८. लोकोक्तिः छेकोक्तिः
११९. वक्रोक्तिः
१२२. स्वभावोक्तिः भाविकं
१२३. उदात्तं
१२४. अत्युक्तिः
१२५. निरुक्तिः प्रतिषेधः
१२६. विध्यलंकारः
१२७. हेत्वलंकारः

## शुद्धाशुद्धसूचिका ।

| पृष्ठं | षङ्क्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ६ | १० | त्तंत्रस | त्तत्रस |
| ६ | १६ | द्यु | यद्यु |
| ७ | ९ | राइ | रामइ |
| ७ | १४ | रत्र | रत्त |
| ९ | १८ | दा | हा |
| १० | २० | मा | मो |
| ११ | ५ | द्र | द्रू |
| ११ | १२ | रः | रैः |
| ११ | १३ | तिकि | तिंकि |
| १२ | २२ | क | प्यरूपक |
| १२ | १५ | ष्ट्र | ष्व |
| १५ | १७ | स्म्रा | स्म्रो |
| १६ | १ | भ्य | म्य |
| १७ | ४ | व | वा |
| २४ | ३ | तौ | तो |
| २६ | २३ | स्सम् | स्सन् |
| ३१ | २ | र्यं | र्यं |
| ३६ | १२ | ससजा | सजसा |
| ४८ | १९ | लुम | म |
| ५३ | ७ | द | दे |
| ५७ | १० | न्ते | ते |
| ५८ | २० | दीं | संदी |
| ६० | २१ | व | तव |
| ६४ | ५ | चघा | जघा |
| ६५ | १२ | थि | थिं |
| ७१ | १० | णे | ण |
| ७२ | २ | रसिक | क |
| ७४ | ८ | द्र | द्रु |
| ७८ | १४ | श्व | श्च |
| ७९ | २२ | ता | तीं |
| ८१ | १४ | र्मु | र्मं |
| ८६ | २३ | त्वा | त्र्या |
| ९२ | १३ | क्य | क्यं |
| ९५ | २० | प्रद | द्प्र |
| ९८ | १७ | वी | र्वा |
| १०६ | १५ | स्म | त्म |
| १०९ | ७ | न्य | न्ये |
| १११ | १७ | मलि | मील |
| ११२ | १६ | बि | बिं |
| .... | १८ | स्पु | स्फु |
| ११७ | १५ | यः | याः |

# वृत्तालङ्काररत्नावली रामस्तुतिः सव्याख्या

## पथ्यार्यावृत्तम् पूर्णोपमालङ्कारः

श्रीराम त्वच्चरणे भक्तिः परमा जगत्स्वशेषेषु ।
कल्पकवल्लीवार्यामाशां पथ्यां च पूरयते ॥ १ ॥

वल्लीकान्तं प्रणम्याहं व्याख्यास्यामि मया कृताम् । वृत्तालङ्काररत्नावल्याख्यां रामस्तुतिं मुदा ॥ चन्द्रालोककृदुक्तेन क्रमेणालङ्कृतीश्शतम् । उपमादिमहेत्वन्ता धृत्वेयं स्तुतिरीरिता ॥ क्वचित्कुवलयानन्दकृदुक्ता रीतिरादृता । वृत्तरत्नाकरोक्तेन क्रमेणैव धृतानि च ॥ वृत्तानि तेषां नामात्र विनिर्दिष्टं स्तुतौ सकृत् । त्यक्तमत्यन्तमश्राव्यं वृत्तं रसविभञ्जकम् । स्तुतेर्मङ्गलरूपत्वान्न प्रोक्तं मङ्गलं पृथक् । चन्द्रालोककृदाख्यातं सर्वालङ्कृतिलक्षणम् । ईषत्कुवलयानन्दप्रोक्तां तद्विवृतिं तथा । धृत्वा संक्षेपतो रामस्तुतिव्याख्या विरच्यते ॥

उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः । यत्रोपमानोपमेययोश्चारु सादृश्यं स्पष्टं प्रकाशते तत्रोपमालङ्कारः । तत्रोपमानोपमेयसाधारणधर्मोपमावाचकानां चतुर्णामुपादाने पूर्णोपमा ।

तामार्यावान्तरभेदेन पथ्यावृत्तेनोदाहरति । श्रीरामेति । आर्याल-क्षणं तु "यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टा-दश द्वितीये चतुर्थके पञ्चदश साऽऽर्या" इति । पथ्यालक्षणं तु "त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः । पथ्येति नाम तस्याश्छन्दोविद्भिः समाख्यातम् ।" इति । हे श्रीराम तव चरणे परमा श्रेष्ठा भक्तिः अशेषेषु समस्तेषु जगत्सु कल्पकवल्ली कल्प-लतेव आर्यां पूज्यां पथ्यां हितां चाशां मनोरथं पूरयते पूर्णां निर्वर्तयते । अत्रकल्पकवल्ली भक्तिराशापूरणमिवशब्दश्चेत्येतेषा-मुपमानोपमेयसाधारणधर्मोपमावाचकानां चतुर्णामप्युपादानादियं पूर्णोपमा । आर्यां पथ्यामिति वृत्तनामनिर्देशान्मुद्रालङ्कारश्च । मुद्रालङ्कारः स्तुतौ सर्वत्र तत्तदलङ्कारैः सङ्कीर्णः ॥ १ ॥

विपुलार्या—चतस्रो लुप्तोपमा आद्याः

मेघश्यामं तामरससमानमुखं दृशोश्शशाङ्कन्तम् ।
कान्त्या कन्दर्पायन्तं विपुलाक्षं श्रये रामम् ॥ २ ॥

वर्ण्योपमानधर्माणामुपमावाचकस्य च । एकद्वित्र्यनुपादा-नाद्भिन्ना लुप्तोपमाऽष्टधा ॥ उपमेयादीनां चतुर्णां मध्ये एकस्य द्वयोस्त्रयाणां वा प्रतिपादकशब्दाभावे लुप्तोपमेत्युच्यते सा चाष्ट-धा । यथा—वाचकलुप्ता (१) धर्मलुप्ता (२) धर्मवाचकलुप्ता (३) वाचकोपमेयलुप्ता (४) उपमानलुप्ता (५) वाचकोपमान-लुप्ता (६) धर्मोपमानलुप्ता (७) धर्मोपमानवाचकलुप्ता (८) चेति । तत्रोपमानलोपरहितांश्चतुरो भेदान्विपुलावृत्तेनोदाहरति । मेघेति । तल्लक्षणं तु "उल्लङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः । यस्यास्तां पिङ्गलनागो विपुलामभिसमाख्याति" इति । मेघवच्छ्या-



मं तामरससमानमुखं पद्मसदृशवदनं दृशोर्नयनयोश्शशाङ्कन्तं शशाङ्कंचन्द्रमिवाचरन्तं विपुलाक्षं आयतनेत्रं रामं श्रये आश्रये । अत्र मेघश्याममित्यत्र वाचकलोपः । मेघइवश्यामइत्यर्थे उपमानानि सामान्यवचनैरिति समासविधायकशास्त्रकृतः । तामरससमान-मुखमित्यत्र धर्मलोपः सत्वैच्छिकः नशास्त्रकृतः । कान्त्याता-मरससमानमुखमित्यपि वक्तुं शक्यत्वात् । शशाङ्कन्तमित्यत्र धर्मवाचकलोपः । शशाङ्कमिवाचरन्तमित्यर्थे विहितस्य शशाङ्कव-दानन्दात्मकाचारार्थकस्य क्विप इवशब्देन सह लोपात् अत्र धर्म-लोपऐच्छिकः दृशोरानन्दात्मकतया शशाङ्कन्तमिति तदुपादान-स्यापि संभवात् । कान्त्याकन्दर्पायन्तमित्यत्र वाचकोपमेयलोपः । अत्र कान्त्येति विशेषणसामर्थ्यात् स्वात्मानं कन्दर्पमिवाचरन्तमि-त्यर्थस्य गम्यमानतया स्वात्मन उपमेयस्य सहोपमावाचकेनानुपा-दानात् । सत्वैच्छिकः स्वात्मानं कन्दर्पायन्तमित्युपमेयोपादान-स्यापि संभवात् ॥ २ ॥

चपलार्या—अवशिष्टा लुप्तोपमाः

चपला मनोमधुकरी पदाम्बुजं राम यद्गता त्वत्कम् ।
तन्मधुमदोत्कटा च तदशङ्कितं काकतालीयम् ॥ ३ ॥

उपमानलोपसहितांश्चतुरो भेदान् चपलावृत्तेनोदाहरति चप-लेति। तल्लक्षणंतु "उभयार्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः । चपलेति नाम तस्याः प्रकीर्तितं नागराजेन" इति । हे राम चपला चञ्चला मम मनएव मधुकरी भृङ्गी त्वत्कं त्वदीयं पदा-म्बुजं गता प्राप्ता तस्य पदाम्बुजस्य मधुना मकरन्देन तत्पानेनेत्य-र्थः मदोत्कटा अधिकमदा च जातेति यत्तदशङ्कितं अवितर्कितं

काकतालीयं काकतालशब्दौ समासविषये काकतालसमवेतक्रियावर्तिनौ तेन काकागमनमिव तालपतनमिव काकतालमितीवार्थे समासाच्च तद्विषयादिति ज्ञापकात्समासः [ज्ञापकादिति । इवार्थे समासाभावे तद्विषयादित्यनेनेवार्थविषयसमासानुवादोनुपपन्नस्तद्ज्ञापक इत्यर्थः] काकागमनतालपतनयोरुपमेयं मनोमधुकर्याः क्वचिद्गमनं तत्रैव रामपादाम्बुजस्यावस्थानं च । तेन मनोमधुकर्याः रामपादाम्बुजस्य च समागमः काकतालसमागमसदृशइति फलति । ततः काकतालमिव काकतालीयमिति द्वितीयस्मिन्निवार्थे समासाच्च तद्विषयादिति सूत्रेण इवे प्रतिकृतावित्यधिकारस्थेन छप्रत्ययः । तथाच तालफलरसो यथा काकेनोपभुक्तः एवं रामपदाम्बुजमकरन्दो मनोमधुकर्योपभुक्तइति तदर्थः । ततश्च काकागमनतालपतनसमागमरूपस्य काककृततालफलरसोपभोगरूपस्य चोपमानस्यानुपादानाच्छप्रत्ययार्थोपमायामुपमानलोपः । समासार्थोपमायां वाचकोपमानलोपः । सर्वोप्ययं लोपः छप्रत्ययविधायकशास्त्रकृतः [इदं पुनरिति श्लोकं पूरयित्वा] अशङ्कितमिति साधारणधर्मस्यानुपादाने छप्रत्ययार्थोपमायां धर्मोपमानलोपः । समासार्थोपमायां धर्मोपमानवाचकलोपः ॥ ३ ॥

मुखचपलावृत्तं—अनन्वयालङ्कारः ।

सीते मुखं त्वदीयं त्वदीयमुखमिव मनोहरं तस्मात् ।
त्वन्मुखचपला सततं भवति हि राघवमनोभृङ्गी ॥ ४ ॥

एकस्यैव वस्तुन उपमानोपमेयत्वमनन्वयः । वर्ण्यमानमपि स्वस्य स्वेन साधर्म्यं नान्वेतीति व्युत्पत्तेः । अनन्वयिनोप्यर्थस्याभिधानं सदृशान्तरव्यवच्छेदेनानुपमत्वद्योतनाय । तमनन्वयं मुखचपलावृत्तेनोदाहरति । सीतइति । तल्लक्षणं तु “ आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः । शेषे पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ” इति । हेसीते त्वदीयं मुखं त्वदीयमुखमिव मनोहरं तस्मात्कारणात् राघवस्य रामस्य मन एव भृङ्गी भ्रमरी सततं सदा तव मुखे चपला चञ्चला भवति हि त्वन्मुखं त्वन्मुखमिव मनोहरमित्युक्ते मनोहरत्वे त्वन्मुखस्य नान्यत्सदृशमस्तीति सदृशान्तरव्यवच्छेदो लभ्यते ततश्च स्वस्य स्वेनापि सादृश्यासंभवादनुपमत्वे पर्यवसानम् ॥ ४ ॥



जघनचपलावृत्तं—अनन्वयः ।

परयुवतिजघनचपला नाभून्न यतोऽस्ति नो भविष्यति च ।
राम तव चित्तवृत्तिर्विभाति ते चित्तवृत्तिरिव ॥ ५ ॥

पुनरपि तमनन्वयं जघनचपलावृत्तेनोदाहरति । परेति । तल्लक्षणंतु “ प्राक्प्रतिपादितमर्धे प्रथमेतरे तु चपलायाः । लक्ष्म श्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ” इति हेराम तव चित्तवृत्तिस्ते तव चित्तवृत्तिरिव शुद्धा विभाति यतः सा परयुवतीनां जघनेषु कटिपुरोभागेषु चपला चञ्चला नाभूत् नास्ति नवर्तते नोभविष्यति नभविष्यतिच । ततस्सा सेव शुद्धेति भावः । अत्र समन्वयः पूर्ववत् । तत्र मनोहरत्वधर्मउक्तः अत्र शुद्धत्वधर्मो नोक्तः ॥ ५ ॥

गीतिवृत्तं—अनन्वयः ।

राम त्वद्गुणनिकरास्त्वद्गुणनिकरा इवेति कविगीतिः ।
सत्या चापि च मिथ्या त्वदितरवस्तूपलंभराहित्यात् ॥ ६ ॥

पुनरपि तमनन्वयं गीतिवृत्तेनोदाहरति । रामेति । तल्लक्षणंतु “ आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः । दलयोः

कृतयतिशोभां तां गीतिं गीतवान्भुजंगेशः ।" हेराम तव गुणानां शौर्यौदार्यादिगुणानां निकरास्समूहास्तव गुणनिकरा इवेति कवीनां गीतिरुक्तिस्सत्या यथार्था कुतः त्वद्वत इतरेषु वस्तुषु पदार्थेषु सुरनरादिष्वित्यर्थः उपलंभस्य शौर्यादिगुणानां प्राप्तेः राहित्यादभावात् । अपिच तव गुणनिकराः त्वद्गुणनिकराइव त्वच्छब्दोन्यपर्यायः त्वेषामन्येषां गुणनिकराइवेति कविगीतिर्मिथ्या अनृता कुतः त्वद्वत इतरवस्तुषूपलंभस्य भवद्गुणसदृशगुणप्राप्तेः राहित्यात् । अत्रापि समन्वयः पूर्वपूर्ववत् । रम्यत्वधर्मो नोक्तः ॥६॥

उपगीतिवृत्तं—उपमेयोपमालङ्कारः ।

चन्द्रसमं त्वद्वक्त्रं त्वद्वक्त्रंसमो विभो चन्द्रः ।
तिलकश्शशवच्छशकस्तिलकवदेषोपगीतिर्मे ॥ ७ ॥

पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता । [पर्यायेण वाक्यभेदेन तच्चेत् उपमानोपमेयत्वं विवक्ष्यते चेत्] द्वयोः पर्यायेणोपमानोपमेयत्वकल्पनं तृतीयसदृशव्यवच्छेदार्थम् । तामुपमेयोपमामुपगीतिवृत्तेनोदाहरति । चन्द्रेति । तल्लक्षणंतु "आर्याद्वितीयकेऽर्धे यत्कथितं लक्षणं तत्स्यात् । ह्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते" इति । हेविभो राम तव वक्त्रं मुखं चन्द्रसमं आह्लादकरत्वेन चन्द्रतुल्यम् चन्द्रस्त्वद्वक्त्रसमः तिलकः शशवत् त्वद्वक्त्रगतं नीलं कस्तूरीतिलकं चन्द्रमण्डलगतशशतुल्यं शशएवशशकस्तिलकवदित्येषा मे मम उपगीतिस्समीपोच्चारितोक्तिः । अत्र चन्द्रमुखयोश्शशतिलकयोर्वा कस्य चित्केन चित्सादृश्ये वर्णिते तस्याप्यन्येन सादृश्यमर्थसिद्धमपि मुखतो वर्ण्यमानं तृतीयसदृशव्यवच्छेदकं भवति आह्लादकरत्वनैल्यधर्मौ नोक्तौ ॥ ७ ॥



उद्गीतिवृत्तं—उपमेयोपमा ।

राम इव लक्ष्मणोऽपि श्यामो रामोऽपि लक्ष्मणवत् ।
उद्गीतिं जनकसुते श्रृणु मम सत्यां समीरपुत्रस्य ॥ ८ ॥

पुनरपि तामुद्गीतिवृत्तेनोदाहरति । राम इति । तल्लक्षणंतु "आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः । सोद्गीतिः किल गदिता तद्वद्यत्यंशभेदसंयुक्ता" इति । सीतया रामलक्ष्मणचिह्नानि पृष्टस्य हनुमतो वचनमत्रोत्तरश्लोके च । हेजनकसुते सीते समीरपुत्रस्य वायुपुत्रस्य मम सत्यामुद्गीतिमुच्चैरुक्तिं श्रृणु लक्ष्मणोऽपि रा इव श्यामः रामोऽपि लक्ष्मणवच्छ्याम इति ॥ ८ ॥

आर्यागीतिवृत्तं—उपमेयोपमा ।

रामाङ्गवत्सुमित्रातनयाङ्गं सुन्दरं विदेहसुते भोः ।
रामाङ्गं च सुमित्रातनयाङ्गमिवेयमार्यागीतिः ॥ ९ ॥

पुनरपि तामार्यागीतिवृत्तेनोदाहरति रामेति तल्लक्षणंतु "आर्या पूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् । इतरत्तद्वन्निखिलं यदीयमुदितेयमार्यागीतिः" इति भोः हे विदेहसुते सीते रामाङ्गवत्सुमित्रातनयस्य लक्ष्मणस्याङ्गं सुन्दरम् । रामाङ्गं च सुमित्रातनयाङ्गमिव सुन्दरमितीयमार्या पूज्या गीतिरुक्तिः । अत्र पूर्वश्लोके च समन्वयस्सुगमः ॥ ९ ॥

श्लोकवृत्तं—प्रतीपालङ्कारे प्रथमभेदः ।

पुण्यश्लोक रघूत्तंस मृगाङ्कं त्वन्मुखोपमम् ।
दृष्ट्वा रात्रिचरा दुष्टा हर्षवन्तोऽपि बिभ्यति ॥ १० ॥

प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् । प्रसिद्धोपमानोपमेयभावप्रातिलोम्यात्प्रतीपम् ॥ तच्छ्लोकवृत्तेनोदाहरति । पुण्येति । तल्लक्षणंतु "पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः । षष्ठं गुरु च विज्ञेयमेतच्छ्लोकस्य लक्षणम्" इति ॥ पुण्यश्लोक पवित्रकीर्ते हे रघूत्तंस राम दुष्टाः रात्रिचराः राक्षसाः त्वन्मुखोपमं भवद्वदनतुल्यं मृगाङ्कं चन्द्रं दृष्ट्वा रात्रौ यथेच्छसञ्चारानुकूल्येन हर्षवन्तोऽपि बिभ्यति त्वन्मुखोपममृगाङ्कदर्शनेन तन्मध्यस्थमृगसदृशमायामृगरूपधारिमारीचचरितस्मृत्या भयं प्राप्नुवन्ति । अत्र उपमानत्वेन प्रसिद्धस्य चन्द्रस्योपमेयत्वं कल्पितम् ॥ १० ॥

विद्युन्मालावृत्तम्—प्रतीपे द्वितीयभेदः

अङ्गं श्यामं पीनं वक्त्रं बिभ्रद्भास्वन्मे रामेति ।
गर्वेणालं विद्युन्मालावीतो मेघो भातीदृक्षः ॥ ११ ॥

अन्योपमेयलाभेन वर्ण्यस्यानादरश्च तत् । अन्यद्वर्ण्यमुपमानं तद्रूपं यदुपमेयं तस्य लाभेन वर्णनीयस्य मुखादेरनादरो गर्वपरिहारोऽपि तत्प्रतीपमित्यर्थः । अत्युत्कृष्टगुणतया वर्ण्यमानस्यान्यत्र स्वसादृश्यमसहमानस्योपमेयं किञ्चित्प्रदर्श्य तावता तस्य तिरस्कारो द्वितीयं प्रतीपम् । तद्विद्युन्मालावृत्तेनोदाहरति । अङ्गमिति । तल्लक्षणंतु " मोमोगोगो विद्युन्माला " इति । हेराम पीतं पीतवर्णं वस्त्रमम्बरं बिभ्रद्धरत् श्यामं मे अङ्गं भास्वत्प्रशस्तभायुक्तमिति गर्वेणालं पर्याप्तं गर्वो मास्त्वित्यर्थः विद्युतां तटितां मालया तत्या वीतः परिवृतः मेघः ईदृक्षः एतादृशः पीताम्बरधारिप्रशस्तभायुक्तश्यामलत्वदङ्गसदृशइत्यर्थः । भाति राजते ॥ ११ ॥





माणवकवृत्तं—प्रतीपे तृतीयभेदः ।

माणवकं दाशरथिं वीक्ष्य जनो वक्ति पुरे ।
मास्तु गुरो बुद्धिमदस्त्वत्सदृशोऽस्त्येष इति ॥ १२ ॥

वर्ण्योपमेयलाभेन तथान्यस्याप्यनादरः । [अन्यस्यावर्ण्यस्यानादरोऽपि तथा प्रतीपमित्यर्थः] अत्युत्कृष्टगुणतया क्वचिदप्युपमानभावमसहमानस्यावर्ण्यस्य वर्ण्यमुपमेयं परिकल्प्य तावता तस्य तिरस्कारः पूर्वप्रतीपवैपरीत्येन तृतीयं प्रतीपम् ॥ तन्माणवकवृत्तेनोदाहरति माणवकमिति । तल्लक्षणंतु "माणवकं भात्तलगा" इति । पुरे अयोध्यानगरे स्थितो जनः माणवकं ब्रह्मचारिणं ब्रह्मचर्यनियमपूर्वकं बुद्धिविशेषेण शीघ्रं गृहीतसर्ववेदशास्त्रादिकमित्यर्थः । दाशरथिं रामं वीक्ष्य इत्येवं वक्ति वदति कथमितिचेत् हेगुरो बृहस्पते एषः दाशरथिः तव सदृशः अस्ति । तस्मात्तव बुद्धिमदः मतिगर्वः मास्त्विति वक्तीति पूर्वेण संबन्धः । पूर्वश्लोके अवर्ण्यस्योपमानरूपोपमेयस्य विद्युन्मालावृतमेघस्य लाभेन वर्णनीयपीताम्बरधारिरामाङ्गस्यानादरः । अत्र वर्ण्यस्योपमेयस्य दाशरथेर्लाभेनावर्ण्यस्य बृहस्पतेरनादरः ॥ १२ ॥

नगस्वरूपिणीवृत्तम्—प्रतीपे चतुर्थो भेदः ।

त्वदीयदाससन्निभा शशिप्रभेति चक्षते ।
मुधा हि राम सर्वदा न सा नगस्वरूपिणी ॥ १३ ॥

वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत् । वर्ण्येनान्यस्योपमित्यनिष्पत्तिवचनं चतुर्थं प्रतीपम् तन्नगस्वरूपिणीवृत्तेनोदाहरति त्वदीयेति । तल्लक्षणं तु "द्वितुर्यषष्ठमष्टमं गुरु प्रयोजितं यदा । तदा निवेदयन्ति तां बुधा नगस्वरूपिणी"मिति हेराम शशि-

प्रभा चन्द्रकान्तिः त्वदीयहाससंनिभा तव स्मितेन सदृशीति चक्षते कवयो वदन्ति तन्मुधा मिथ्या हि यतः सा शशिप्रभा सर्वदा नगच्छतीति नगं स्थिरंचतत्स्वरूपंच नगस्वरूपं तदस्या-अस्तीति नगस्वरूपिणी स्थिररूपा न ततोमुधेति पूर्वेण संबन्धः। अत्र मुधाहीत्याद्युक्त्योपमित्यनिष्पत्तिः कथिता ॥ १३ ॥

मणिबन्धवृत्तं—प्रतीपे पञ्चमभेदः।

राम महीक्षिन्मौलिलसत्सन्मणिबन्धादीप्रपद।
राजति नित्यं तेजसि ते चण्डकरेण स्यादिव किम् ॥ १४ ॥

प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते। उपमेयस्यैवोपमान-प्रयोजनधूर्वहत्वेनोपमानकैमर्थ्ये पञ्चमं प्रतीपम् तन्मणिबन्ध-वृत्तेनोदाहरति रामेति। तल्लक्षणंतु "चम्पकमाला यत्र भवेदन्त्य-विहीना प्रेमनिधे। छन्दसि दक्षा ये कवयस्तं मणिबन्धं तेब्रुवते" इति चम्पकमालालक्षणंतु "चम्पकमाला चेद्भमसागः" इति महीक्षितां राज्ञां मौलिषु मकुटेषु लसतां राजमानानां मणीनां रत्नानां बन्धेन संबन्धेन आसमन्ताद्दीप्रे उज्वले पदे पादौ यस्य तस्य संबुद्धिः हेराम ते तव तेजसि प्रतापे नित्यं राजति सति चण्डकरेण सूर्येण किमिव स्यात् न किमपीत्यर्थः अत्र प्रतापका-र्यस्य रामतेजसैवोपपत्तौ सूर्योनिरर्थकइति भावः ॥ १४ ॥

मत्तावृत्तम्—अनुभयाभेदरूपकम्।

कामो हन्ति प्रसवभरैर्वा वज्रैर्वाऽस्मान्किमिति विशेते।
उन्मत्ता या विरहिजनालिस्स त्वं बाणान्वद भगवन्ते ॥ १५ ॥

विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत्। रूपकं तत्त्रिधाधि-



क्यन्यूनत्वानुभयोक्तिभिः। विषयि उपमानभूतंपद्मादि विषयस्त-दुपमेयभूतं वर्णनीयं मुखादि विषयिणो रूपेण विषयस्य रञ्जनं रूपकम्। अन्यरूपेण रूपवत्वकरणात् तच्च क्वचित्प्रसिद्धविषय्य-भेदे पर्यवसितं क्वचिद्भेदे प्रतीयमानएव तदीयधर्मारोपमात्रे पर्य-वसितं ततश्च रूपकं तावत् द्विविधम् अभेदरूपकं ताद्रू-प्यरूपकं चेति द्विविधमपि प्रत्येकं त्रिविधं प्रसिद्धविषय्याधि-क्यवर्णनेन तन्यूनत्ववर्णनेनानुभयत्वोक्त्या च एवं रूपकं षड्वि-धम्। तत्रानुभयाभेदरूपकं मत्तावृत्तेनोदाहरति। काम इति। तल्ल-क्षणंतु "मत्ता ज्ञेया मभसगयुक्तेति" एतदादिषु त्रिषु श्लोकेषु राम-मुद्दिश्योक्तिः॥ हेभगवन् उन्मत्ता उन्मादेन चित्तविभ्रमेण युक्ता या विरहिजनानां वियोगिजनानां आलिस्सङ्घः सा कामो मन्मथः अस्मान्मादृशान्विरहिजनान्प्रसवभरः पुष्पसमूहैर्वा वज्रैः पवि-भिर्वा हन्ति प्रहरतीति किं किमर्थं विशेते संशयं करोति। सः पुष्पैर्वा वज्रैर्वा विरहिनिहन्ता त्वं ते तव बाणान् पुष्पाणि वा वज्राणि वा वद कथय अत्र सत्वमित्यनेन वर्णनीये रामे कामा-भेदानुरञ्जनात्कामस्य कामावस्थातो वर्णनीयरामभावावस्थायां न्यूनत्वाधिक्ययोरवर्णनाच्चानुभयाभेदरूपकम् ॥ १५ ॥

चम्पकमाला [रुक्मवती] न्यूनाभेदरूपकम्।

भूमिलुठन्ती र्यातुकपङ्क्ती रुक्मवती स्संवीक्ष्य जनौघः।
शंसति गौर्या शम्भुरवित्वा तद्रहितो हन्त्येष दशास्यम् ॥ १६ ॥

न्यूनाभेदरूपकं रुक्मवतीवृत्तेनोदाहरति। "तल्लक्षणंतु "भ्मौ सगयुक्तौ रुक्मवतीयमिति"। तस्याएव चंपकमालेति नामा-

न्तरं चम्पकमालाचेद्भमसागइति । भूमौ लुठन्तीः रुक्मवतीः स्वर्णमकुटवतीः यातुनः राक्षसस्य रावणस्य कानां शिरसां पङ्क्तीः संवीक्ष्य जनानामोघः समूहः शंसति वदति किमिति शम्भुरीश्वरः गौर्या पार्वत्या सह दशास्यं रावणमवित्वा वरप्रदानादिना पूर्वं रक्षित्वा इदानीं तया गौर्या रहितः एषः रामात्मकस्सन्दशास्यं हन्तीति । अत्र शम्भुरेष इति रामस्य शिवाभेदमुपदर्श्य गौरीरहितइति न्यूनताप्रतिपादनान्न्यूनाभेदरूपकम् ॥ १६ ॥

इन्द्रवज्रावृत्तम्—अधिकाभेदरूपकम् ।

दृष्ट्वा भवन्तं भगवन्नयोध्यानार्यः प्रजल्पन्ति मनोभवोऽयम् ।
देवेन्द्रवज्राहतिभिः कलम्बै स्साङ्गोऽद्य सन्तापयतेऽबला नः ॥

अधिकाभेदरूपकमिन्द्रवज्रावृत्तेनोदाहरति । दृष्ट्वेति तल्लक्षणंतु "स्यादिन्द्रवज्रा ततजास्ततोगौ" इति हेभगवन् अयोध्यायां स्थिताः नार्यः स्त्रियः भवन्तं दृष्ट्वा प्रजल्पन्ति कथयन्ति किमिति मनोभवः कामः अयं रामात्मकः अतएव अद्य साङ्गः सावयवस्सन् देवेन्द्रस्य वज्रस्येवाहतिः प्रहारो येषां तथाभूतैः कलम्बैः शरैः अबला दुर्बलाः स्त्रियः नः अस्मान् संतापयतइति । अत्र मनोभवोऽयमिति रामस्य कामाभेदमुपदर्श्य कामावस्थातस्साङ्ग इत्युत्कर्षविभावनादधिकाभेदरूपकम् ॥ १७ ॥

उपेन्द्रवज्रावृत्तं—अनुभयताद्रूप्यरूपकम् ।

उपेन्द्र वज्राङ्कराब्ज राम भवन्मुखाब्जे नयनाभिरामे ।
विराजमाने किमनेन कार्यं सुधांशुना वा सरसीरुहा वा ॥ १८ ॥

अनुभयताद्रूक[illegible]मुपेन्द्रवज्रावृत्तेनोदाहरति उपेति



तल्लक्षणंतु "उपेन्द्रवज्रा जतजास्ततोगौ" इति । उपेन्द्र वामनावतारे इन्द्रावरज वज्राङ्कराब्ज वज्ररेखाङ्कितहस्तपद्म हेराम नयने अभिरमयतीति नयनाभिरामं नेत्रानन्दकरं तस्मिन् भवतः तव मुखाब्जे अब्जः चन्द्रः तत्कार्यकारिणि वा अब्जं कमलं तत्कार्यकारिणि वा मुखे विराजमाने सति अनेन सुधांशुना चन्द्रेण वा सरसीरुहा कमलेन वा किं कार्यं किं प्रयोजनं नकिमपीत्यर्थः । अत्र मुखाब्जस्य किं कार्यं सुधांशुना वा सरसीरुहा वेति प्रसिद्धाब्जाद्भेदमाविष्कृत्य तस्य च प्रसिद्धाब्जकार्यकारित्वमात्रप्रतिपादनेनोत्कर्षापकर्षयोरप्रदर्शनादनुभयताद्रूप्यरूपकम् ॥ १८ ॥

उपजातिवृत्तं—न्यूनताद्रूप्यरूपकं ।

श्रीमन्न देवोपवनोद्भवोऽन्यस्त्वं कल्पवृक्षो रघुवंशकेतो ।
विरूपजातेरपि संश्रिताया मनोरथं पूरयसे समस्तम् ॥ १९ ॥

न्यूनताद्रूप्यरूपकमुपजातिवृत्तेनोदाहरति श्रीमन्निति । इन्द्रवज्रोपेन्द्रवज्रयोः पादः पादौ पादावा परस्परं मिलिताश्चेदसावुपजातिः । इतरवृत्तेष्वप्येवमुपजातिरूह्या । अत्र स्तुतावसाने उपजातिभेदा बहवो लक्ष्यरूपेण प्रदर्शिताः । श्रीमन् सीतारूपलक्ष्मीयुक्त रघुवंशस्य केतो ध्वजवदुन्नत हेराम त्वमन्यः अपरः कल्पवृक्षः यतः संश्रितायाः आत्मानमाश्रितायाः विरूपजातेः पक्षिरूपजातेरपि जटायुषोपि कुरूपमर्कटादेरपि समस्तं मनोरथं पूरयसे अतः कल्पवृक्षइति पूर्वेण संबन्धः । किन्तु देवानामुपवने उद्याने नन्दने उद्भव उत्पत्तिर्यस्य तथाविधो नासि अत्रान्यः कल्पवृक्ष इति रामस्य प्रसिद्धकल्पवृक्षाद्भेदमाविष्कृत्य तस्य च कल्प-

वृक्षकार्यकारित्वं देवोद्यानोत्पत्तिराहित्यञ्चोक्तमिति न्यूनताद्रूप्यरूपकम् ॥ १९ ॥

सुमुखीवृत्तं—अधिकताद्रूप्यरूपकम् ।

रघुवर कान्त कलङ्कयुतं जडमय मिन्दु मुपेक्ष्य मृगः ।
श्रयितु मिहैति तवास्यविधुं जनकसुतेत्यवदत्सुमुखी ॥ २० ॥

अधिकताद्रूप्यरूपकं सुमुखीवृत्तेनोदाहरति रघ्विति तल्लक्षणं-तु "नजजलगैर्गदिता सुमुखीति" मायामृगं मारीचमालोक्य रामं प्रति सीतायावचनमिदम् । कान्त पते रघुवर राम अयं मृगः कलङ्कयुतं चिह्नयुतं दोषवन्तंच जडममृतमयं अविद्वांसंच इन्दुं चन्द्रमुपेक्ष्य विमुच्य तव आस्यविधुं मुखचन्द्रं श्रयितुं आश्रयितुं इह अत्र एति आगच्छति इति सुमुखी सुन्दरवदना जनकसुता अवदत् । अत्र इन्दुमास्यविधुमिति पदद्वयकथनेन मुखचन्द्रस्य प्रसिद्धचन्द्राद्भेदः प्रदर्शितः कलङ्कादिराहित्यमार्थिकमानन-चन्द्रइत्यधिकताद्रूप्यरूपकम् । रूपकस्य सावयवत्वादिभेदप्रपञ्च-श्शिवार्थालङ्कारस्तवे द्रष्टव्यः ॥ २० ॥

दोधकवृत्तं—परिणामालङ्कारः ।

दोधकसूद्यवनीतनुजायाः वृत्तनिवेदिकपिं रघुवीरः ।
वीक्ष्य विकासिदृगंबुरुहाभ्यां श्लेषमयीं भृतिमार्पिपदस्मै ॥२१॥

परिणामः क्रियार्थश्चेद्विषयी विषयात्मना । यत्र आरोप्यमाणः विषयी किञ्चित्कार्योपयोगित्वेन निबध्यमानः स्वतस्तस्य तदुपयोगित्वासंभवात्प्रकृतात्मतापरिणतिमपेक्षते तत्र परिणामालङ्कारः । तं दोधकवृत्तेनोदाहरति दोधकेति । तल्लक्षणंतु " दोधकवृत्तमिदं बभ



भागौ " इति दोधकसूदी खलविनाशकः रघुवीरः रामः अवनीतनुजायाः भूपुत्र्यास्सीतायाः वृत्तनिवेदिनं वृत्तान्तावेदकं कपिं वानरं हनुमन्तं विकासिभ्यां हर्षविकसिताभ्यां दृग्भ्यां नयनाभ्यामेवाम्बुरुहाभ्यांपद्माभ्यां वीक्ष्य विलोक्य अस्मै हनुमतेश्लेषमयीमालिङ्गनरूपां भृतिं पण्यं दूत्यवेतनमार्पिपत् अदात् । अत्र अम्बुरुहयोः वीक्षणोपयोगित्वं निबध्यते नतु दृशोः । मयूरव्यंसकादिसमासेनोत्तरपदार्थ-प्राधान्यात् । नचोपमितसमासाश्रयणेन दृशावम्बुरुहे इवेति पूर्वपदार्थप्राधान्यमस्त्विति वाच्यम् । विकासीति सामान्यधर्मप्रयो-गात् । उपमितं व्याघ्रादिभिस्सामान्याप्रयोगइति तदप्रयोगएवोप-मितसमासानुशासनात् । अम्बुरुहयोर्वीक्षणोपयोगित्वं न स्वात्मना सम्भवति । अतस्तयोः प्रकृतदृगात्मतापरिणत्यपेक्षणात्परिणामाल-ङ्कारः । श्लेषमयीं भृतिमित्यत्राप्यारोप्यमाणा भृतिः श्लेषतापत्त्या हनुमद्दानलक्षणकार्योपयोगिनी न स्वात्मना हनुमतः रघुनाथप्रसा-दैकापेक्षित्वेन वेतनार्थित्वाभावादिति परिणामालङ्कारः ॥ २१ ॥

शालिनीवृत्तं—उल्लेखे प्रथमोभेदः ।

सीताकामिन्कानने सार्थवाहैर्नीलं रत्नं कर्षकैः कालमेघः ।
सङ्घैस्स्रोतश्शालिनी तापसानां कालिन्दीति प्रेक्ष्यसे त्वं यथेच्छम् ॥२२॥

बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते । यत्र नानाविधधर्म-योग्येकमेव वस्तु तत्तद्धर्मयोगरूपनिमित्तभेदादनेकेन ग्रहीत्राऽनेक-धोल्लिख्यते तत्रोल्लेखालङ्कारः । अनेकधोल्लेखने रुच्यर्थित्वभयादिकं यथार्हं प्रयोजकम् । रुचिरभिरतिरर्थित्वं लिप्सा । तमुल्लेखं शालिनीवृत्तेनोदाहरति । सीतेति । तल्लक्षणं तु "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैरिति" । हे सीताकामिन् राम कानने वने त्वं इच्छाम-

नतिक्रम्य यथेच्छं तत्तदिच्छानुगुणं सार्थवाहैः सङ्घचारिभिः रत्न वणिक्श्रेष्ठैः नीलं रत्नं इन्द्रनीलमणिरिति । कर्षकैः कृषीवलैः कालमेघः नीलमेघइति तापसानां तपस्विनां सङ्घैः स्रोतश्शालिनी प्रवाहयुक्ता कालिन्दी यमुनेति प्रेक्ष्यसे दृश्यसे । अत्रैकएव रामो नैल्यतेजस्वित्वशाली सार्थवाहैर्महार्घरत्नलिप्सया नीलमणिरिति दृश्यते । नैल्याप्रार्थितवितरणशाली कर्षकैरुचितकालवर्षलिप्सया कालमेघइति दृश्यते । नैल्यपवित्रत्वशाली तापसैः स्नानपुण्यधनलिप्सया यमुनेतिच दृश्यते ॥ २२ ॥

वृक्षः कल्पस्तापसैः कौशिकाद्यैः मारीचाद्यै राक्षसैर्दण्डधारी ।
दृष्टः स्रष्टाऽहल्यया रामचन्द्रो ह्रीशालिन्या सीतया पुष्पधन्वा ॥२३॥

पुनरपि तं शालिन्योदाहरति । वृक्षइति । रामचन्द्रः चन्द्रवदाह्लादको रामः सिद्धाश्रमे कौशिकाद्यैः विश्वामित्रप्रभृतिभिस्तापसैः कल्पवृक्षो दृष्टः । तदाश्रममखसमयजातयुद्धे मारीचादिराक्षसैर्दण्डधारी यमो दृष्टः । गौतमाश्रमे अहल्यया आत्मनः शिलात्वनिवारणपूर्वकयथापूर्वस्त्रीभावसृष्ट्या स्रष्टा विधातेति दृष्टः । मिथिलायां ह्रीशालिन्या सलज्जया सीतया पुष्पधन्वा कामो दृष्टः । अत्रमनोरथपूरणपराक्रमापूर्वसर्जनसामर्थ्यसौन्दर्यशाली रामः तापसैः राक्षसैः अहल्यया सीतया चार्थित्वभयभक्तिरुचिभिः कल्पवृक्षयमधातृकामरूपो दृष्टः ॥ २३ ॥

वातोर्मीवृत्तं—द्वितीयोल्लेखः ।

वक्त्रे चन्द्रं वचनेऽच्छे गुरुं भोः कीर्तौ स्वामिन्महतामर्जुनं त्वाम् ।
अङ्गे श्रीमन्तमियान्मानसं मे वातोर्मीवच्चपलं रामचन्द्र ॥ २४ ॥



एकेन बहुधोल्लेखेप्यसौ विषयभेदतः । ग्रहीतृभेदाभावेऽपि विषयभेदात् (विषयसप्तमीनिर्दिष्टो विषय इत्युच्यते) एकस्य बहुधोल्लेखेप्यसावुल्लेखालङ्कारः । तं वातोर्मीवृत्तेनोदाहरति । वक्त्रइति । तल्लक्षणंतु "वतोर्मीयं कथिता म्भौ तगौ गः" इति । महतां पूज्यानां स्वामिन्नीश्वर भोः हेरामचन्द्र वक्त्रे मुखे चन्द्रं आह्लादकं सोमं च अच्छे निर्मले वचने वचसि गुरुं महान्तं पटुं वा बृहस्पतिंच कीर्तौ यशसि अर्जुनंशुद्धं कार्तवीर्यार्जुनं च । अङ्गे अवयवे श्रीमन्तं शोभायुक्तं लक्ष्मीपतिंच त्वां वातोर्मीवत् वातयुक्ततरङ्गवचपलं चञ्चलं मे ममम‍ानसं मनः इयात् प्राप्नोतु इदमुदाहरणं श्लेषसङ्कीर्णं । वक्त्रविषयेआह्लादक इत्यादिवत्सोमइत्याद्यर्थान्तरस्यापि क्रोडीकरणात् ॥ २४ ॥

वातोर्मीवृत्तं श्लेषासङ्कीर्ण उल्लेखः ।

श्रीरामोक्तौ मृदुलं पाणिनेत्रे दीर्घं चित्ते सरसं श्याममङ्गे ।
कीर्तौ शुद्धं स्मरतु त्वामजस्रं वातोर्मीवच्चपलं मेऽन्तरङ्गम् ॥२५॥

श्लेषासङ्कीर्णं वातोर्मीवृत्तेनोदाहरति । श्रीति हेश्रीराम उक्तौ वचने मृदुलं काटवरहितं पाणीचनेत्रेच पाणिनेत्रं तस्मिन्पाण्योर्नेत्रयोश्च दीर्घं चित्ते मनसि सरसं भक्तेषु सप्रीतिकमङ्गे श्यामं कीर्तौ शुद्धंच त्वां वातोर्मीवच्चपलं मेऽन्तरङ्गं मनः अजस्रं सदा स्मरतु ॥

वातोर्मी—श्लेषासङ्कीर्ण उल्लेखः ।

श्रीराम त्वां यशसीन्दुं प्रतापे भानुं कान्तौ मदनं चेष्टदाने ।
चिन्तारत्नं वचने गीष्पतिं मे वातोर्मीवच्चपलं चित्तमेतु ॥२६॥

पुनरपि तं तद्वृत्तेनोदाहरति । श्रीति । चिन्तारत्नं चिन्तामणिं शिष्टंस्पष्टम् ॥ २६ ॥

भ्रमरविलसितवृत्तं—स्मृतिमदलङ्कारः ।

रामो दृष्ट्वा भ्रमरविलसितं पद्मं मञ्जुद्विजरवभरितम् ।
क्रीडाभेदे जनकसुताया दध्यौ तस्या मुखमुपमणितम् ॥ २७ ॥

स्यात्स्मृतिभ्रान्तिसन्देहैस्तदङ्कालङ्कृतित्रयम् । स्मृतिभ्रान्तिसन्देहैस्साद्दश्यान्निबध्यमानैः स्मृतिमान् भ्रान्तिमान् सन्देह इति स्मृत्यादिपदाङ्कितमलङ्कारत्रयं भवति । तत्र स्मृतिमदलङ्कारं भ्रमरविलसितवृत्तेनोदाहरति रामइति । तल्लक्षणंतु "म्भौन्लौगस्स्याद्भ्रमरविलसितमिति" । रामः भ्रमरैः विलसितं शोभितं मञ्जुना मधुरेण द्विजानां चक्रवाकादिपक्षिणां रवेण शब्देन भरितं पूर्णं च पद्मं दृष्ट्वा जनकसुतायाः सीतायाः क्रीडाभेदे पुरुषायिते उपमणितं रतिकूजितयुक्तं तस्याः सीतायामुखं दध्यौ सस्मार ॥ अत्र रामस्य भ्रमरव्याप्तपक्षिशब्दनिभृतपद्मदर्शनेन पुरुषायितावसरे केशव्याप्तमणितवत्सीतामुखस्मरणात्स्मृतिमदलङ्कारः ॥ २७ ॥

रथोद्धतावृत्तं—भ्रान्तिमदलंकारः ।

तावकं दशरथात्मजाननं श्यामलाङ्ग विपिने चकोरकाः ।
नीलशैलसमुदञ्चितेन्दुरित्याभ्रमन्त्यतिमनोरथोद्धताः ॥ २८ ॥

भ्रान्तिमदलङ्कारं रथोद्धतावृत्तेनोदाहरति । तावकमिति । तल्लक्षणंतु "रान्नराविह रथोद्धता लगाविति" । श्यामलाङ्ग दशरथात्मजं रामं विपिने वने चकोरकाः चकोरपक्षिणः नीलशैलात्समुदञ्चित उद्गत इन्दुश्चन्द्रइति अतिमनोरथेन अधिकाभिप्रायेणोद्धता उद्भटास्सन्तः आभ्रमन्ति अधिकभ्रमं कुर्वन्ति । समन्वयः स्पष्टः ।

स्वागतावृत्तं—सन्देहालङ्कारः ।

तापसा रघुवृषाववलोक्य स्वागतादिकमनूच्य जिघृक्षू ।



हव्यमिन्द्रशिखिनौ किमु साक्षादश्विनौ किमिति संशयमापुः ॥ २९ ॥

सन्देहालङ्कारं स्वागतावृत्तेनोदाहरति । तापसाइति तल्लक्षणंतु "स्वागतेति रनभा गुरुयुग्ममिति" । तापसाविश्वामित्राश्रमस्था मुनयः रघुवृषौ रामलक्ष्मणौ अवलोक्य स्वागतादिकं सुष्ठु युवयोरागतमितिप्रभृतिप्रश्नजातं अनूच्य दर्शनानन्तरमुक्त्वा एतौ हव्यं अस्मिन्यज्ञे प्रदास्यमानं हविः जिघृक्षू ग्रहीतुमिच्छू साक्षादिन्द्रशिखिनौ किमु इन्द्राग्नी किं अथवा अश्विनौ अश्विदेवौ किमिति संशयमापुः समन्वयः स्पष्टः ॥ २९ ॥

वृत्तावृत्तं—शुद्धापह्नुत्यलङ्कारः ।

दशरथनृपतनुभूर्नायं किमथ च खलशिखिनिर्वापी ।
घनजलमुगयि मतेर्वृत्ताविदमुपविलसितमस्माकम् ॥ ३० ॥

शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः । वर्णनीये वस्तुनि तत्सदृशधर्मारोपफलकस्तदीयधर्मनिह्नवः । कविमतिविकासोत्प्रेक्षितधर्मान्तरस्यापि वा निह्नवः शुद्धापह्नुतिः तां वृत्तावृत्तेनोदाहरति । दशेति । तल्लक्षणंतु "ननसगगुरुरचिता वृत्तेति" । अयि हेसखे अयं दशरथनृपस्य तनूभूः पुत्रो रामः न अथ किंतर्हि कइतिचेत् खलादुष्टाएव शिखीअग्निः तंनिर्वापयति शमयतीतितथाभूतः घनः सान्द्रः जलमुङ्मेघइति इदमस्माकं मतेः बुद्धेर्वृत्तौ व्यापारे उपविलसितं भातं अत्र रामे मेघत्वारोपफलकस्तदीयधर्मस्य रामत्वस्यापह्नवः । कविमतिविकासोत्प्रेक्षितधर्मान्तरनिह्नवस्योदाहरणंतु । मुखं नहीदं किं तर्हि सुधांशुस्तव जानकि । अपिवा पद्ममथवा सौवर्णादर्शमण्डलमिति ॥ ३० ॥

पृथ्वीवृत्तम्—हेत्वपह्नुतिः ।

जनकनृपसुता नहि पृथ्वी नबहुपतिरथो नहि लक्ष्मीः ।
अचलमतिरसावसुनाडी रघुकुलतिलकस्य विचित्रा ॥ ३१ ॥

स एव युक्तिपूर्वश्चेदुच्यते हेत्वपह्नुतिः । (सएवशुद्धापह्नव एव युक्तिपूर्वः हेतुपूर्वः) तां पृथ्वीवृत्तेनोदाहरति जनकेति । तल्लक्षणंतु " ननभगगुरुकैरथ पृथ्वीति " । जनकनृपसुता सीता हि यतो नबहुपतिः बहवः पतयः यस्याः सा बहुपतिः न बहुपतिः नबहुपतिः अतः पृथ्वी भूमिः न अथ हि यतः असौ सीता चलाचञ्चलामतिः यस्याः साचलमतिः नचलमतिरचलमतिरथो लक्ष्मीर्न । किन्त्वसौ रघुकुलतिलकस्य रामस्य विचित्राऽऽश्चर्यचरित्रा असुनाडी प्राणनाडी अत्र सीतायामेवाबहुपतित्वाचलमतित्वयुक्तिभ्यां पृथ्वीत्वलक्ष्मीत्वापह्नवो रामप्राणनाडीत्वारोपार्थः ॥ ३१ ॥

मौक्तिकमालावृत्तं—पर्यस्तापह्नुतिः ।

शंसति रामस्सुतनुगलैक्षं मौक्तिकमाला न पुनरियं किम् ।
मौक्तिकमाला सुरतसमुत्था घर्मजलाली मुखमभितो या ॥३२॥

अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः । यत्र कचिद्वस्तुनि तदीयधर्मनिह्नवः अन्यत्र वर्णनीये वस्तुनि तस्य धर्मस्यारोपार्थः पर्यस्तापह्नुतिस्तां मौक्तिकमालावृत्तेनोदाहरति । शंसतीति । तल्लक्षणंतु " मौक्तिकमाला यदि भतनागाविति " । रामः सुतनोः स्त्रियाः सीतायाः गलैक्षंगलंकण्ठंईक्षित्वाद्दृष्ट्वा शंसतिवदति किमिति इयं सीताकण्ठस्थिता मौक्तिकमाला मौक्तिकमालान किंपुनर्मौक्तिकमालेतिचेत् या मुखमभितः मुखेसमन्ततः सुरतसमुत्था रतिकालसमुद्भूता घर्मजलस्य स्वेदजलस्याळी पङ्क्तिः सैव मौक्तिकमाला । अत्र मौक्तिकमालायां मौक्तिकमालात्वनिह्नवो



वर्णनीयायां स्वेदपङ्क्तौ तदारोपार्थः ॥ ३२ ॥

मौक्तिकमालाभेदः—भ्रान्तापह्नुतिः ।

रघुवर वक्त्रे मौक्तिकमालां किमलमकार्षीर्मैथिलकन्ये ।
नहिनहि यद्वत्ते मम तद्वद्रतरणजाता स्वेदकणाली ॥ ३३ ॥

भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे । (अन्यस्य अप्रकृतस्य । भ्रान्तिवारणे तत्वाख्याने सति) तां मौक्तिकमालाभेदेनोदाहरति । रघ्विति । तल्लक्षणंतु " नयभगगैस्स्यान्मौक्तिकमालेति " । क्रीडावसरे सीतारामयोर्विलासोक्तिरियम् । हे रघुवर राम वक्त्रे तवमुखे मौक्तिकमालां अलमकार्षीः त्वमलङ्कृतवान्किमिति सीतया पृष्टस्य रामस्योत्तरमिदं किमिति हेमैथिलकन्येसीते नहिनहि आदरातिशये द्विरुक्तिः नाहं ममसुखे मौक्तिकमालामलङ्कृतवान् किंपुनरियमितिचेत् यद्वद्यथा तेतव तद्वत्तथा मम रतरणे अतिशयितक्रीडायां जाता स्वेदकणाली स्वेदबिन्दुसमूहः । अत्र राममुखे सुरतसञ्जातस्वेदकणावलिं विलोक्य मुक्तावलिसादृश्याद्दृजुबुध्या सीतया राम तवमुखे मौक्तिकावलिंकित्वमलङ्कृतवानिति पृष्टेनरामेण मैथिलकन्येनहिनहिइत्यादिना तत्वोक्त्या भ्रान्तिवारणं कृतम् । इदंसम्भवद्भ्रान्तिपूर्विकायाभ्रान्तापह्नुतेरुदाहरणम् ।

वंशस्थवृत्तम्—कल्पितभ्रान्तिपूर्वा भ्रान्तापह्नुतिः ।

जटा नहीयं कचक्लृप्तवेणिका न भूतिरङ्गे विरहोत्थशुक्लिमा ।
विषं न कण्ठे मलराज्यनाप्लवाच्छिवभ्रमात्किं सुमबाण हंसि माम् ॥ ३४ ॥

कल्पितभ्रान्तिपूर्वा भ्रान्तापह्नुतिं वंशस्थवृत्तेनोदाहरति । जटेति । तल्लक्षणंतु "जतौ तु वंशस्थमुदीरितं जराविति" । विरहवा-

धितया सीतया कृतं मन्मथोपालम्भनमिदम् । हि यतः इयं जटा न किंतु कचैः केशैः क्लृप्ताजातावेणिका अङ्गे इयंभूतिः भस्मन किंतु विरहोत्थः प्रियवियोगजातः शुक्लिमा श्वैत्यम् इदंकण्ठेविषंन किंतु अनाप्लुवादस्नानात्संजाता मलराजी मलरेखा । ततः हेसुमबाण- मन्मथ शिवभ्रमादीश्वरभ्रान्त्या मांकिं हंसिप्रहरसि । अत्र कल्पि- तभ्रान्तिर्जटानहीयमित्यादिनिषेधमात्रोन्नेया पूर्ववत्प्रश्नाभावात् ॥

श्रीवृत्तम्—अर्थसंयोजनया छेकापह्नुतिः ॥

आलि निकुञ्जे श्रुतिभुवि जल्पन्पाणिकुचोष्ठं मुहुरुपगृह्णन् ।
आपतदङ्घ्रौ जनकसुते किं श्रीरघुनाथो नहि सखि भृङ्गः ॥ ३५ ॥

छेकापह्नुतिरन्यस्य शङ्कातस्तथ्यनिह्नवे । कस्यचित् कञ्चित्प्रति रहस्योक्तावन्येन श्रुतायां स्वोक्तेस्तात्पर्यान्तरवर्णनेन तथ्यनिह्नवे छेकापह्नुतिस्तां श्रीवृत्तेनोदाहरति । आलीति । तल्लक्षणंतु "पञ्चरसैः श्रीर्भतनगगैः स्यादिति" हे आलि नर्मसखि निकुञ्जे लतागृहे प्रणय- कलहतिरस्कृतः पतिः श्रुतिभुवि कर्णप्रदेशे जल्पन् किमपि कथयन् कर्णंश्च । पाणीकुचावोष्ठौच मुहुरुपगृह्णन् स्पृशन्सन् ममाङ्घ्रौ पादे आपतत् सम्यगपतदिति सीतयोक्तमाकर्ण्यान्या काचित्साधारण- सखी पृच्छतिस्म । किमिति हेजनकसुते सीते श्रीरघुनाथः किमप- तदिति । तस्योत्तरमाहसीता । किमिति हेसखि नहि रघुनाथः नापतत् किंतु भृङ्गः भ्रमरइति । अत्र सीतया नर्मसखीं प्रति आ- लीत्यादिनाङ्घ्रावित्यन्तेन स्वनायकवृत्तान्ते निवेद्यमाने तदाकर्ण्य श्रीरघुनाथः किमिति शङ्कितवतीमन्यां सामान्यसखीं प्रति नहि- सखिभृङ्गइति निह्नवः । इदमर्थयोजनया तथ्यनिह्नवे उदाहरणं ॥

वंशस्थंवृत्तम्—शब्दयोजनया छेकापह्नुतिः ।



त्वयीनवंशस्थ शठे न मे कुटी किमङ्ग कुत्स्या तु तवेति जल्पितम् ।
निशम्य तत्स्वप्नजमर्थिता प्रिया रघूत्तमेनालिपरं तदब्रवीत् ॥ ३६॥

शब्दयोजनया छेकापह्नुतिं वंशस्थवृत्तेनोदाहरति । त्वयीति अङ्ग हे इनवंशस्थ सूर्यवंशस्थ राम शठे गूढविप्रियकृति त्वयि मे मम कुटी कौटिल्यं न । ममकुत्स्याकौटिल्येनतु तव किंस्यात् इति तत्स्वप्नजं तस्याः सीतायाःस्वप्नसम्भूतं जल्पितं उक्तिं निशम्य श्रुत्वा रघूत्तमेन रामेणार्थिता प्रार्थिता प्रियादयितासीता तज्जल्पितमालि- परं इनवंशस्थशठे सूर्यवंशस्थानांशठागूढविप्रियकारिणी तस्या- स्सम्बुद्धिः इनवंशस्थशठे त्वयि मेकुटीनेत्यादिना सखीपरमब्रवीत् । इदं पूर्वोक्तंच विषयान्तरयोजने उदाहरणम् ॥ ३६ ॥

इन्द्रवंशावृत्तम्—विषयैक्येप्यवस्थाभेदेनयोजनेछेकापह्नुतिः ।

प्रातस्सखीसम्मुखतो रघूत्तमक्रीडाभिमानादिकमालपन्त्यसौ ।
योगीन्द्रवंशामृतवल्लरी गुरून्दृष्ट्वाऽथ बुद्धाऽस्मि सखीत्यपूरयत् ॥

विषयैक्येप्यवस्थाभेदेन योजने छेकापह्नुतिं इन्द्रवंशावृत्तेनो- दहरति । प्रातरिति । तल्लक्षणं तु "स्यादिन्द्रवंशा ततजैरसंयुतै- रिति" प्रातः सख्यास्सम्मुखतोऽग्रे रघूत्तमेनरामेणसहक्रीडाभिमा- नादिकं रतिकलहादिकं आलपन्तीकथयन्ती असौ योगीन्द्रवंशस्य- जनकवंशस्यामृतवल्लरी अमृतलतासीता गुरून्श्वशुरादीन्दृष्ट्वा हेस- खि अथानन्तरं बुद्धा जागरणवत्यस्मि इत्यपूरयत् आलापशेषं पूर- यतिस्म । अत्र नासौ जाग्रदवस्थावृत्तान्तः किंतु स्वाप्निकइत्यव- स्थाभेदयोजनयाऽपह्नवः अथेत्यादिवाक्यशेषेण प्रकाश्यते ॥ ३८ ॥

तोटकवृत्तम्—कैतवापह्नुतिः ।

मम रूपरिपो रघुराड्विरहिन्परितोऽट कमप्यय चेति वदन् ।

स्तनितच्छलतो जलवर्षमिषाच्छरवृष्टिकरस्त्वयि राम घनः ॥

कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः । तां तोटकवृत्तेनोदाहरति । ममेति । तल्लक्षणंतु "इह तोटकमंबुधिसैः कथितमिति" वर्षाकालेऽपि सीताविरहाग्नितापमनुभवन्तं रामं प्रति लक्ष्मणस्योक्तिरियम् । मम रूपस्य श्यामलरूपस्य रिपोशत्रो अपहर्तरित्यर्थः विरहिन् सीताविरहदुःखित हेरघुराट् राम परितस्समन्ततः अट चर कमपि सहायं अय प्राप्नुहिचेति, स्तनितच्छलतः गर्जनव्याजेन वदन्कथयन्घनः मेघः हेराम त्वयि जलवर्षस्य मिषात् व्याजात् शरवृष्टिकरः बाणवर्षकृदस्ति । अत्रासत्यत्वाभिधायिनाच्छलपदेन-मिषपदेनच नेदं स्तनितं नेदं जलवर्षंच किंतु ममेत्यादिपूर्वार्धनिर्दिष्टं कथितं शरवर्षंचेत्पह्नवः प्रतीयते ॥ ३८ ॥

द्रुतविलम्बितवृत्तम्—उक्तविषया स्वरूपोत्प्रेक्षा ।

रघुपते भवदीयकलेबरं प्रसरदुज्वलकान्ति वितर्कये ।
तव पराक्रमशुष्मयशोविधुद्रुतविलम्बितमिन्द्रमहामणिम् ॥३९॥

संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना । उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे । अन्यधर्मसंबन्धनिमित्तेनान्यस्यान्यतादात्म्यसंभावनमुत्प्रेक्षा । साच वस्तुहेतुफलात्मतागोचरत्वेन त्रिविधा । अत्र वस्तुनः कस्यचिद्वस्त्वन्तरतादात्म्यसंभावना प्रथमा स्वरूपोत्प्रेक्षेत्युच्यते । अहेतोर्हेतुभावेनाफलस्य फलत्वेनोत्प्रेक्षाहेतूत्प्रेक्षा फलोत्प्रेक्षेत्युच्यते । अत्राद्या स्वरूपोत्प्रेक्षा उक्तविषयानुक्तविषया चेति द्विविधा । परे हेतुफलोत्प्रेक्षे सिद्धविषया असिद्धविषयाचेति प्रत्येकं द्विविधे । तत्रोक्तविषयां स्वरूपोत्प्रेक्षां द्रुतविलम्बितवृत्तेनोदाहरति रघ्विति । तल्लक्षणंतु "द्रुतविलम्बितमाह नभौभराविति" । हेरघुपते प्रसरन्ती समन्ततश्चरन्त्युज्वला दीप्यमानाच कान्तिश्शोभायस्यतथाभूतं भवदीयं कलेबरमङ्गं तव पराक्रमशुष्मणा प्रतापाग्निना यशोविधुना कीर्तिहिमकरेणच यथाक्रमं पूर्वं द्रुतं द्रवीभूयधावन्तं पश्चाद्विलम्बितं स्थिरीभूतं चेन्द्रमहामणिमिन्द्रनीलमहारत्नं वितर्कये शङ्के । अत्र रामाङ्गस्य सर्वतोविसारिदीप्यमानकान्तिमत्त्वधर्मसंबन्धेन निमित्तेनरामप्रतापाग्निद्रुतयशोविधुविलम्बितेन्द्रनीलरत्नतादात्म्यसंभावना स्वरूपोत्प्रेक्षा कलेबरस्य विषयस्योपादानादुक्तविषया । रघुपते भवदीयकलेबरं प्रसरदुज्वलकान्ति वितर्कये । द्रुतविलम्बितमध्यगतौमतौवलनिषूदननीलमहामणिम् । इति पाठे रघुपते प्रसरदुज्वलकान्ति भवदीयकलेबरं द्रुतस्यशीघ्रगतेः विलम्बितस्यमन्दगतेश्च मध्यंगता अद्रुतविलम्बिता गतिः प्रसरोयस्यास्तथाभूतायां मतौबुद्धौ (वलेति) इन्द्रनीलमहारत्नं वितर्कये (अत्र रामाङ्गस्य सर्वतो·········निमित्तेन इन्द्रनीलरत्नतादात्म्य·········क्षा ॥ ३९ ॥

प्रमुदितवदनावृत्तम्—अनुक्तविषया स्वरूपोत्प्रेक्षा

स्मितरुचिसितजालकेनामुना प्रमुदितवदनाम्बुजायाः स्त्रियाः ।
रघुकुलतिलकस्समाबध्य तौ नयनझषवराविवाकर्षति ॥ ४० ॥

अनुक्तविषयां स्वरूपोत्प्रेक्षां प्रमुदितवदनावृत्तेनोदाहरति स्मितेति । तल्लक्षणंतु "प्रमुदितवदना भवेन्नौरराविति" रघुकुलतिलकः रामः अमुनास्वीयेन स्मितरुचिर्हासकान्तिरेव सितंश्वेतं जालकंमीनाकर्षणसाधनंरम्यजालंतेन प्रमुदितंविकसितं वदनाम्बुजंयस्याः तथाभूतायाः स्त्रियास्सीतायाः तौ नयनेनेत्रेएवझषवरौमीनोत्तमौ समाबध्यसम्यग्बध्वा आकर्षतीव । अत्रसीतानयनगोचरराम-

हासव्याप्तेः स्वनिष्ठसीतानयनदृढासञ्जनतदपाङ्गगोचरीकृतत्वरूप-निमित्तेन रामकर्तृकस्मितरुचिजालकरणकसीतानयनमीनाकर्षणता-दात्म्योत्प्रेक्षा अनुक्तविषया स्वरूपोत्प्रेक्षा विषयभूतसीतानयनगो-चररामहासव्याप्तेरनुपादानात् ॥ ४० ॥

कुसुमविचित्रावृत्तम्—सिद्धविषया हेतूत्प्रेक्षा ।

कुसुमविचित्रालकभरसङ्गाज्जनकसुताया दशरथसूनो ।
भवति शरीरं तव कमनीयं सुरभि च नूनं जलधरनीलम् ॥४१॥

सिद्धविषयां हेतूत्प्रेक्षां कुसुमविचित्रावृत्तेनोदाहरति । कुसु-मेति तल्लक्षणंतु "नयसहितौ न्यौ कुसुमविचित्रेति" । हेदशरथ-सूनोराम कमनीयंसुन्दरं तवशरीरं जनकसुतायास्सीतायाः कुसुमैः विचित्रस्यालङ्कृतस्य कचभरस्यकेशपाशस्य क्रीडावसरे सङ्गान्नू-नं उत्प्रेक्ष्यमाणात्संबन्धात् सुरभि परिमलयुक्तं जलधरवन्नीलंच भवति । रामशरीरस्य स्वतस्सिद्धयोस्सौरभ्यनैल्ययोर्वस्तुतो जा-नकीकुसुमालङ्कृतकेशसङ्गो नहेतुरित्यहेतोस्तस्य हेतुत्वेन सम्भा-वना हेतूत्प्रेक्षा । तत्सङ्गस्य विषयस्य सत्वात्सिद्धविषया ॥ ४१ ॥

जलोद्धतगतिवृत्तम्—असिद्धविषया हेतूत्प्रेक्षा ।

जलोद्धतगतिस्स हंसनिकरः स्त्रिया विरहितं पयोदनिहतम् ।
रघूत्तमविभुं विलोकितुमसुं किमप्रभुरुपैत्किलौत्तरसरः ॥ ४२ ॥

असिद्धविषयां हेतूत्प्रेक्षां जलोद्धतगतिवृत्तेनोदाहरति जलेति । तल्लक्षणंतु—"रसैर्जसजसाजलोद्धतिगतिरिति" । जले उद्धता उद्धटा गतिर्यस्यतथाभूतः सः हंसानांहंसपक्षिणांनिकरः समूहः स्त्रियाविरहितं पयोदेनमेघेननिहतंपीडितंच अमुंरघूत्तमविभुंरघुश्रे-ष्ठंप्रभुंरामं विलोकितुंद्रष्टुं अप्रभुः किं अशक्तत्वेनोत्प्रेक्ष्यमाणस्सन्



किलप्रसिद्धं औत्तरसरः उत्तरदिशिस्थितंमानससरः उपैत्प्राप्नोत् । अत्रहंसानांवर्षाकालेस्वाभाविकेमानससरोगमने विरहपीडितरामद-र्शनाशक्तिर्नहेतुरिति तत्रतद्धेतुत्वसंभावनाहेतूत्प्रेक्षा वस्तुतस्तदश-केरभावादसिद्धविषया ॥ ४२ ॥

भुजङ्गप्रयातवृत्तम्—सिद्धविषया फलोत्प्रेक्षा ।

भुजङ्गप्रयातं निहन्तुं कुमार्गं भुजङ्गापकारिन् रघूत्तंस नूनं ।
अनङ्गायुताभा तव प्रत्नमूर्तिः विहङ्गाधिपस्योपरिष्टाद्विभाति ॥ ४३ ॥

सिद्धविषयांफलोत्प्रेक्षांभु जङ्गप्रयातवृत्तेनोदाहरति भुजङ्गेति । तल्लक्षणंतु "भुजङ्गप्रयातं भवेद्यैश्चतुर्भिरिति" भुजङ्गानां कृष्णावतारे कालीयादिसर्पाणां अस्मिन्नवसरे रावणादिविटानांचापकारिन्शत्रो रघूत्तंसराम भुजङ्गैर्विटैरेव भुजङ्गैः सर्पैः प्रयातंगतं कुमार्गंकुटिल-मार्गं निहन्तुंविनाशयितुंनूनं उत्प्रेक्ष्यमाणाय भुजङ्गप्रयातकुटिलमा-र्गनिवारणायेत्यर्थः । तव अनङ्गायुताभा अयुतकामकान्तिः प्रत्ना-पुरातनी मूर्तिः वैकुण्ठनिलयाविष्णुमूर्तिः विहङ्गाधिपस्य गरुडस्यो-परिष्टादुपरि विभातिराजति । अत्रविष्णुमूर्तिःस्वतएव भुजङ्गप्रयातं हन्ति । नतुगरुडोपरिनिवासबलादिति विष्णुमूर्तिकृतभुजङ्गप्रयात-हननस्य तत्फलत्वेनोत्प्रेक्षा सिद्धविषया फलोत्प्रेक्षा ॥ ४३ ॥

स्रग्विणीवृत्तम्—असिद्धविषया फलोत्प्रेक्षा ।

मौक्तिकस्रग्विणीं जानकीकन्धरां वीक्षते राघवो मौक्तिकर्क्षावलेः ।
वक्त्रजैवातृकं निष्कलंकं स्वकं दर्शयित्वां परं मोदनाय ध्रुवम् ॥ ४४ ॥

असिद्धविषयां फलोत्प्रेक्षां स्रग्विणीवृत्तेनोदाहरति । मौक्ति-केति तल्लक्षणंतु "रैश्चतुर्भिर्युता स्रग्विणी संमतेति" । राघवोरामः मौक्तिकस्रग्विणींमुक्ताहारवतीं जानक्याः"कन्धरां कण्ठं वीक्षते कि-

मर्थमितिचेत् मौक्तिकानामेव ऋक्षाणांनक्षत्राणामावलेस्ततेः स्वकं-स्वीयं निष्कलङ्ककलङ्करहितं वक्त्रजैवातृकंमुखचन्द्रं दर्शयित्वा प्रद-र्श्य मोदनायध्रुवम्-उत्प्रेक्ष्यमाणायतन्मोदकरणाय वीक्षतइतिपूर्वेण-सम्बन्धः ॥ अत्ररामकर्तृकमुक्तामालायुक्तसीताकण्ठवीक्षणस्य मौ-क्तिकर्क्षावलेरित्यादिनोक्तं नफलमिति तस्य तत्फलत्वेनोत्प्रेक्षणाद-सिद्धविषया फलोत्प्रेक्षा ॥ ४४ ॥

प्रियंवदावृत्तम्—गम्योत्प्रेक्षा ।

रघुपते त्वयि रताः प्रियंवदाः कमपि बाह्यविषयं मुनीश्वराः ।
नहि विदन्त्यनुपमान्तराः कृपाजलनिधौ तव निमग्नमूर्तयः ॥ ॥ ४५ ॥

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षाव्यज्यते शब्दैरिवशब्दोऽपि तादृशः । इत्युत्प्रेक्षाव्यञ्जकत्वेन परिगणितानां शब्दानां प्रयोगे वाच्योत्प्रेक्षा तेषामप्रयोगे गम्योत्प्रेक्षा । तां प्रियंव-दावृत्तेनोदाहरति रघ्विति । तल्लक्षणंतु "भुवि भवेन्नभजरैः प्रियंवदे-ति" हेरघुपते त्वयि रताः प्रीतिमन्तः प्रियंवदाःप्रियवादिनः अनुप-मान्तराः असदृशमनसः मुनीश्वराः कमपि बाह्यंत्वत्तः बहिर्भूतं वि-षयं भोग्यवस्तु नविदन्तिनजानन्तिहि कथंभूतास्सन्तइतिचेत् तव कृपाजलधौ करुणासमुद्रे निमग्नमूर्तयः नितरांमग्नशरीराइत्युत्प्रेक्ष्य-माणाः सन्तो नविदन्तीतिपूर्वेणसंबन्धः । अत्ररामभक्तमुनीनां स्वत-स्सिद्धे बाह्यविषयवेदनाभावे रामकृपाजलधिमग्नशरीरत्वं नहेतुरि-त्यहेतोस्तस्य हेतुत्वेन संभावना हेतूत्प्रेक्षा रामकृपाजलधिमग्नशरी-रत्वरूपविषयस्यासत्वादसिद्धविषयाच । व्यञ्जकशब्दाप्रयोगाद्ग-म्याच । इतरेतूत्प्रेक्षाभेदाश्शिवार्थालङ्कारे द्रष्टव्याः ॥ ४५ ॥

ललितावृत्तम्—अभेदरूपकातिशयोक्तिः ।



सन्तप्तहाटकसमानवर्णया वल्या नितान्तललितात्मना युतः ।
श्रीमांस्तमालविटपी मनोहरस्तापन्निवारयति मूलमीयुषाम् ॥ ४६ ॥

रूपकातिशयोक्तिस्स्यान्निगीर्याध्यवसानतः । विषयस्य स्वश-ब्देनोल्लेखनं विना विषयिवाचकेनैवशब्देनग्रहणं विषयनिगरणम् । तत्पूर्वकं विषयस्य विषयिरूपतयाध्यवसानमाहार्यनिश्चयः तस्मिन्स-ति रूपकातिशयोक्तिः । अत्रातिशयोक्तौरूपकविशेषणं रूपके द-र्शितानां विधानामत्रापि संभवोऽस्तीत्यतिदेशेन प्रदर्शनार्थम् । ते-नात्राप्यभेदातिशयोक्तिस्ताद्रूप्यातिशयोक्तिरिति द्वैविध्यं द्रष्टव्यम् । तत्राप्याधिक्यन्यूनताविभागश्चेति सर्वमनुसन्धेयम् । तत्राभेदाति-शयोक्तिं ललितावृत्तेनोदाहरति । सन्तेति । तल्लक्षणंतु "धीरैरभा-णि ललितातभौजराविति" । सन्तप्तेति द्रुतसुवर्णसदृशरूपया नि-तान्तंभृशं ललितात्मना सुकुमारदेहया वल्यालतया युतः युक्तः श्रीमान्कान्तिमान् अतएवमनोहरः रम्यः तमालविटपीतापिञ्छत-रुः मूलमन्तिकमीयुषां प्राप्तवतां तापंसन्तापं निवारयति । अत्र-वल्लीतमालपदाभ्यां सीतारामयोर्ग्रहणपूर्वकं तद्रूपताध्यवसानम् । (अत्रवल्लीतमालपदाभ्यां साध्यवसानलक्षणया शक्यलक्ष्योभयानु-गतकान्तिविशेषादिपुरस्कारेणोपस्थितयोस्सीतारामयोश्शक्त्युप-स्थितस्यवल्लीत्वविशिष्टस्य तमालत्वविशिष्टस्यचाभेदसंसर्गेणान्व-यः । एवंच वल्यभिन्नकान्तिविशेषवत्येतिबोधात् तमालाभिन्नका-न्तिविशेषवानिति बोधाच्चेयमभेदातिशयोक्तिः) ॥ ४६ ॥

प्रमिताक्षरावृत्तम्—ताद्रूप्यरूपकातिशयोक्तिः ।

सततं स्थिरत्वयुतया तटिता मिलितस्सदैव परिवृष्टिकरः ।
ननु कोऽयमम्बुदवरो वदत प्रमिताक्षरान्यवदना विबुधाः ॥ ॥ ४७ ॥

ताद्रूप्यरूपकातिशयोक्तिं प्रमिताक्षरावृत्तेनोदाहरति सततमिति । तल्लक्षणंतु "प्रमिताक्षरा सजससैरुदितेति"। सततंसदा स्थिरत्वयुतयास्थैर्ययुक्तया तटितावियुता मिलितः सहितः सदैव परितोवृष्टिकरः कोऽयमम्बुदवरोमेघश्रेष्ठः प्रमितमल्पमक्षरंयस्मिन्तत्प्रमिताक्षरं तस्मादन्यद्वदनंमुखंयेषांतेप्रमिताक्षरान्यवदनाः अप्रमिताक्षरमुखाः ननु हे विबुधाः विद्वांसः वदत । अत्रतटिदम्बुदशब्दाभ्यां सीतारामयोर्ग्रहणपूर्वकं तद्रूपताध्यवसानम् । स्थिरत्वयुतया तटितेत्युक्त्या कोऽयंसततंपरिवृष्टिकरइत्युक्त्याच प्रसिद्धतटितः प्रसिद्धमेघाच्च भेदः । ततआधिक्यंचगर्भितम् । पूर्वस्मिन्नुदाहरणे नन्यूनत्वं नाधिक्यं च । कोयंभूमिगतश्चन्द्रइत्यादावदिव्यत्वरूपन्यूनताप्रकाशनमूहनीयम् । एवं प्रकारभेदोदाहरणान्यूहनीयानि ॥४७॥

ज्वालावृत्तम्—सापह्नवातिशयोक्तिः ।

रघुवर तव वीर भुजाज्ज्वालाधरकरनिकरो महितो लोके ।
दिनमणिरुदितो विलसत्येनं भ्रमतः कथयन्त्यदितेर्जातम् ॥ ४८ ॥

यद्यपह्नुतिगर्भत्वं (पर्यस्तापह्नुतिगर्भत्वम्) सैव (रूपकातिशयोक्तिरेव) सापह्नवा मता । तां ज्वालावृत्तेनोदाहरति । रघ्विति । तल्लक्षणंतु "ननभमसहिताभिहिता ज्वालेति" हेवीर रघुवर तव भुजादुदितउत्पन्नः ज्वालाधरः अग्निरिवकरनिकरः किरणसमूहोयस्यतथाभूतः दिनमणिस्सूर्यः लोके महितः पूजितो विलसति भाति एनंदिनमणिं भ्रमतः भ्रान्त्या अदितेर्जातं कथयन्ति । अत्रप्रतापः दिनमणित्वेननिगीर्णः । भुजप्रतापएवदिनमणिरिति अतिशयोक्तिः अदितिजातोनदिनमणिरित्यपह्नुतिगर्भा ॥ ४८ ॥

वैश्वदेवीवृत्तम्—भेदकातिशयोक्तिः ।



श्रीराम त्वत्का रूपसम्पद्विभिन्ना वैलक्षण्येन त्वन्मतिर्जेजयीति ।
भावत्कं वीर्यं वा परं वैश्वदेवीष्वीक्षे यन्नाहं सृष्टिषु श्रेयसीषु ॥ ४९ ॥

भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनम् । तां वैश्वदेवीवृत्तेनोदाहरति श्रीति । तल्लक्षणंतु "पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौयाविति"। श्रीराम त्वत्कात्वदीया रूपसम्पत्सौन्दर्यसमृद्धिः विभिन्नाअन्या तवमतिः वैलक्षण्येन विभिन्नतया जेजयीतिभृशंजयति लोकोत्तरावर्तते भावत्कं त्वदीयं वीर्यंवा शौर्यमपि परमन्यत् यत् यतः अहं वैश्वदेवीषु समस्तदेवसंबन्धनीषु श्रेयसीषु अत्यन्तप्रशस्तासु सृष्टिषुसृष्टवस्तुषु नेक्षे त्वद्रूपादिकंनविलोकये ततस्तदन्यदेवेति पूर्वेणसंबन्धः । अत्रलोकप्रसिद्धरूपाद्यभेदेऽपि भेदो वर्णितः ॥

जलधरमालावृत्तम्—संबन्धातिशयोक्तिः ।

सीताकामिन्नवयवशोभाराजीसान्निध्ये ते जलधरमाला दास्यम् ।
धत्ते स्तोमो वलरिपुनीलानां च छात्राग्र्यत्वं प्रभजति कारुण्याप्त्यै ॥५०॥

संबन्धातिशयोक्तिस्स्यादयोगे योगकल्पनम् । तां जलधरमालावृत्तेनोदाहरति । सीतेति । तल्लक्षणंतु "अब्ध्यष्टाभिर्जलधरमालाम्भौस्माविति"। हेसीताकामिन् राम कारुण्यस्य दयायाः आप्त्यैप्राप्त्यै । जलधराणां मेघानांमालापङ्क्तिः तेतव अवयवस्याङ्गस्य शोभाराज्याः कान्तिततेः सान्निध्येसन्निधौ दास्यंदासकर्म धत्तेदधाति । किञ्च वलरिपुनीलानामिन्द्रनीलानांस्तोमोनिकरः छात्राग्र्यत्वंशिष्यवर्यतां प्रभजतिप्रकर्षेणगच्छति । अत्रजलधरेन्द्रनीलयोर्भगवदङ्गकान्तिसन्निधौ दासताशिष्यत्वासंबन्धेऽपि तत्संबन्धोवर्णितः ॥ ५० ॥

प्रभावृत्तम्—असंबन्धातिशयोक्तिः ।

रघुवर भवतो मुखेन्दौ प्रभामहति विलसति क्षपानायकम् ।
नहि खलु विहगाश्चकोराह्वयाः अमृतरसभुजः प्रतीच्छन्त्यपि ॥ ५१ ॥

योगेप्ययोगोऽसंबन्धातिशयोक्तिरितीर्यते । तां प्रभावृत्तेनोदाहरति । रघ्विति तल्लक्षणंतु । "स्वरशरविरतिर्ननौरौ प्रभेति"। हेरघुवरराम प्रभयात्विषामहितेअधिके भवतस्तव मुखेन्दौवदनचन्द्रे विलसतिसति चकोराह्वयाःचकोरनामानः विहगाः पक्षिणः अमृतरसभुजोऽपि क्षपानायकंचन्द्रं नप्रतीच्छन्तिनापेक्षन्ते । अत्रचकोराणांचन्द्रापेक्षासंबन्धेऽपि तदसंबन्धो वर्णितः ॥ ५१ ॥

अभिनवतामरसवृत्तम्—अक्रमातिशयोक्तिः ।

अभिनवतामरसप्रसवाद्यान्विसृजति पञ्चशरान्स्मरवीरे ।
विसृजति मानवती रघुवीरे जनकसुताप्यभिमानमशेषम् ॥५२॥

अक्रमातिशयोक्तिःस्यात्सहत्वे हेतुकार्ययोः । तामभिनवतामरसवृत्तेनोदाहरति । अभीति । तल्लक्षणंतु । "अभिनवतामरसं नजजायइति"। स्मरएववीरःतस्मिन्। अभीति। नूतनपद्मकुसुमादीन्पञ्चशरान्विसृजतिसति रघुवीरेरामे मानवतीप्रणयकलहजनिताभिमानवती जनकसुता सीताप्यशेषं समस्तं अभिमानं विसृजतित्यजति । अत्रस्मरशरप्रक्षेपकालएव सीतामानत्यागः कथितइति हेतुकार्ययोस्सहत्वं वर्णितम् ॥ ५२ ॥

ललनावृत्तम्—चपलातिशयोक्तिः ।

वाञ्छति लङ्कां रघुकुलतिलके गन्तुममुञ्चन्सुरपुरललनाः ।
बन्दिनिबन्धं वृषमुखविबुधाः पङ्क्तिनिबन्धं क्रतुषु च दधिरे ॥



चपलातिशयोक्तिस्स्यात्कार्यें हेतुप्रसक्तिजे (प्रसक्तिः ज्ञानम्) तांललनावृत्तेनोदाहरति । वाञ्छतीति । तल्लक्षणंतु "भ्तौ नसयुक्तौ भवति हि ललनेति"। रघुकुलतिलकेरामे लङ्कांगन्तुं वाञ्छतीच्छतिसति सुरपुरललनाः रावणेन बन्दीं नीताः देवलोकस्त्रियः बन्द्यां कारागृहे निबन्धं नितरांबन्धनममुञ्चन् । वृषमुखाः इन्द्रप्रमुखाः विबुधाश्च क्रतुषुयागेषु पङ्क्त्यामालयानिबन्धंस्थितिं दधिरेधृतवन्तः अत्ररामस्य लङ्काजिगमिषाप्रसक्तिमात्रेण देवस्त्रीणां कारागृहवासत्यागोदर्शितः इन्द्रादीनां क्रतुषु सान्निध्यंच दर्शितम् ।

चन्द्रिकावृत्तम्—अत्यन्तातिशयोक्तिः ।

जगदिदमखिलं पूर्वतस्स्वच्छतामनितरसुलभां तावदापादितम् ।
रघुकुलतिलक त्वद्यशश्चन्द्रिका तदुपरि विमला सर्वतोव्याप्तृता ॥५४॥

अत्यन्तातिशयोक्तिस्स्यात् सहत्वे (पौर्वापर्यव्यतिक्रमे) हेतुकार्ययोः तां चन्द्रिकावृत्तेनोदाहरति । जगदिति । तल्लक्षणंतु "ननततगुरुभिश्चन्द्रिकाश्वर्तुभिरिति"। हेरघुकुलतिलकराम पूर्वतः त्वद्यशश्चन्द्रिकाव्याप्तेः पूर्वमेव इदमखिलं जगदनितरसुलभां अन्यदुष्प्रापांस्वच्छतांशुद्धप्रकाशं तावत्सामस्त्येन आपादितंप्रापितम् । तदुपरि ततस्स्वच्छतापादनात्परं विमला तव यशएवचन्द्रिका सर्वतस्सर्वत्रव्याप्तृतांव्याप्तिंगता । समन्वयः स्पष्टः । अव्यवहितोक्तास्तिस्रोप्यतिशयोक्तयः कार्यशैघ्र्यप्रत्यायनार्थाः ॥ ५४ ॥

प्रहर्षणीवृत्तम्—प्रस्तुततुल्ययोगिता ।

श्रीराम त्वयि जगदीश जातमात्रे कौसल्यादशरथबाहुजासुनाडी ।
पृथ्वीच त्रिदिवसदावलीच वाचावल्यासीच्च कवयतां प्रहर्षणीयम् ॥५५

वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता । प्रस्तुतानामप्र-

स्तुतानांवा गुणक्रियारूपैकधर्मान्वयस्तुल्ययोगिता । तत्रप्रस्तुततुल्ययोगितां प्रहर्षणीवृत्तेनोदाहरति । श्रीति । तल्लक्षणंतु म्नौज्रौगस्त्रिदशयतिः प्रहर्षणीयमिति । जगतामीशश्रीराम त्वयि जातएवजातमात्रेसति कौसल्यायाः दशरथबाहुजस्यदशरथनृपस्यचासुनाडी प्राणनाडी पृथ्वीभूमिश्च त्रिदिवसदांदेवानामावलीततिश्च कवयतांकवीनां इयं वाचावल्ली लतासदृशीवाक्च प्रहर्षणी विकासवत्यासीत् । अत्ररामजननसमये तदीयत्वेनप्रस्तुतानां कौसल्यादशरथप्राणनाडीपृथिवीदेवततिकविवाचां विकासरूपैकक्रियान्वयः ।

मत्तमयूरवृत्तम्—अप्रस्तुततुल्ययोगिता ।

राम श्रीमन्सर्वमनोज्ञे भवदंगच्छायापुञ्जे श्रोत्रमुपेते भुवनेऽस्मिन् ।
कोवा ब्रूयान्मत्तमयूरे जलधारे नीलेचैन्द्रे किञ्च तमाले रुचिरत्वम् ॥५६॥

अप्रस्तुततुल्ययोगितां मत्तमयूरवृत्तेनोदाहरति । रामेति । तल्लक्षणंतु "वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरमिति" । श्रीमन्राम अस्मिन्भुवने सर्वेषांमनोज्ञेरम्ये भवतस्तवाङ्गच्छायायाअवयवकान्तेः पुञ्जेबृन्दे श्रोत्रमुपेतेप्राप्तेसति कोवा मत्तेमदवतिमयूरे जलधारेजलदे ऐन्द्रेनीले इन्द्रनीलेच किञ्च तमाले तापिञ्छेच रुचिरत्वं सौन्दर्यं ब्रूयात्वदेत् । अत्रभगवदङ्गकान्तिवर्णनेप्रस्तुते अप्रस्तुतानांमयूरादीनांरुचिरत्वरूपैकगुणान्वयः ॥ ५६ ॥

मत्तमयूरवृत्तम्—अप्रस्तुततुल्ययोगिता ।

सीताकान्त त्वन्मुखसाम्यत्रुटिबाह्यं चान्द्रं बिम्बं पङ्कयुतत्वात्किल मध्ये ।
सत्सन्तोषिद्वेषितयाऽजस्रममूनि प्रह्लादित्वं सारसजातान्यपि धृत्वा ॥५७

पुनरप्यप्रस्तुततुल्ययोगितां मत्तमयूरवृत्तेनोदाहरति सीतेति । हेसीताकान्त प्रह्लादित्वं आनन्दकरत्वं धृत्वाप्राप्यापि चान्द्रं-



बिम्बंचन्द्रमण्डलं मध्ये पङ्कयुतत्वाज्जलधिकर्दमयुक्तत्वात्किल त्वन्मुखसाम्यस्यभवन्मुखसादृश्यस्य त्रुट्याः लेशाद्बाह्यं बहिर्भूतं लेशरहितमित्यर्थः । अमूनि सारसजातानि कमलबृन्दानि अजस्रंसदासतांनक्षत्राणांसन्तोषिणितोषयितरिचन्द्रे साधुजनसन्तोषिषुच द्वेषितयाद्वेषवत्तयाच त्वन्मुखसाम्यत्रुटिबाह्यानि । अत्रभगवन्मुखवर्णने अप्रस्तुतानां चन्द्रसरोजानां साम्यलेशबाह्यत्वरूपैकगुणान्वयः । आह्लादप्राप्तिरूपैकक्रियान्वयश्च ॥ ५७ ॥

रुचिरावृत्तम्—हिताहिततुल्यवृत्तिरूपा तुल्ययोगिता ।

महीमिमां दशरथभूमिपश्च यस्समार्पयद्गुणरुचिरादिदेव ते ।
अपाहरद्रघुवर याच केकयी तयोर्भवानकुटिलवृत्तिरीक्ष्यसे ॥ ५८ ॥

हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता । तांरुचिरावृत्तेनोदाहरति । महीमिति । तल्लक्षणंतु "चतुर्ग्रहैरिह रुचिरा जभस्जगाइति" । आदिदेव रघुवरराम गुणरुचिः त्वद्गुणप्रीतिमान् यश्च दशरथभूमिपः दशरथनृपः ते तुभ्यमिमां महींभूमिं समार्पयत्समर्पितवान् याच केकयी कैकेयी तेतव महीमपाहरदपहृतवती । तयोः तस्यांकैकेय्यांतस्मिन्दशरथेच भवानकुटिलवृत्तिरवक्रस्वभाव ईक्ष्यसेदृश्यसे अत्रहितेदशरथे अहितायांकैकेय्यांचरामस्यवृत्तितौल्यम् ॥

रुचिरावृत्तम्—हिताहिततुल्यवृत्तिरूपा तुल्ययोगिता ।

प्रतापजश्शुचिरिह ते विदेहजाविलोचनभ्रमरमरन्द सुन्दर ।
रघूत्तम त्रिजगति मित्रमण्डले महापदं जनयति चारिमण्डले ॥ ५९ ॥

पुनरपि तां रुचिरावृत्तेनोदाहरति । प्रतापेति । सुन्दररूप विदेहजायास्सीताया विलोचनेनेत्रेएवभ्रमरौतयोर्मरन्दमकरन्द हेरघूत्तमराम तेतव प्रतापजः प्रतापाज्जातः शुचिः अग्निः त्रिजग-

तिजगत्त्रये मित्रमण्डले सुहृत्समूहे महापदं महत्पदं स्थानमरीणां मण्डले महापदं महतीमापदंच जनयति । अत्रहिताहितयोः मित्रारिमण्डलयोर्महास्थानजनयितृत्वस्य महापज्जनयितृत्वस्यच श्लेषेणाभेदाध्यवसायाद्वृत्तितौल्यम् ॥ ५९ ॥

मञ्जुभाषिणीवृत्तम्—गुणोत्कृष्टसमवचनरूपा तुल्ययोगिता ।

रघुराजसन्ततिसमुद्रसन्मणे रमणीयरावसरसा सती जनैः ।
परिवादिनी परभृताच शस्यते प्रियकामिनी च तव मञ्जुभाषिणी ॥६०॥
सततं महोभिरमितैस्समन्विताः सरसीजबान्धवमहागभस्तयः ।
बडबामुखानलशिखा रघूत्तम प्रथितप्रतापनिकराश्च तावकाः ॥ ६१ ॥

गुणोत्कृष्टैस्समीकृत्य वचोऽन्या तुल्ययोगिता । तांमञ्जुभाषिणीवृत्तपद्याभ्यामुदाहरति । रघ्विति । सततमितिच । तल्लक्षणंतु "सजसाजगौ भवति मञ्जुभाषिणीति" । रघुराजस्य सन्ततिरन्वयएव समुद्रस्तत्रोत्पन्नसन्मणेश्रेष्ठरत्न राम परिवादिनीवीणा परभृताकोकिलस्त्रीच मञ्जुरमणीयं यथातथाभाषिणी भाषणशीला तव प्रियकामिनीप्रनायिकासीताच रमणीयेन रावेण ध्वनिना सरसा रुचिरासती जनैश्शस्यतेश्लाघ्यते । अत्रवर्णनीया सीता वीणया कोकिलयाच जनश्लाघ्यत्वेन समीकृता ॥ ६० ॥

हेरघूत्तम सरसीजबान्धवस्य सूर्यस्य महान्तः गभस्तयः किरणाः बडबामुखानलस्य बाडबाग्नेः शिखाज्वालाः तावकाः त्वदीयाः प्रथिताः प्रख्याताः प्रतापनिकराश्च सततममितैरसङ्ख्यातैर्महोभिस्तेजोभिस्समन्विताः । अत्र वर्णनीया रामप्रतापसमूहाः रविकिरणैर्बडवाग्निशिखाभिश्च सतताामितमहोविशिष्टत्वेन समीकृताः ॥

सरसावृत्तम्—दीपकालङ्कारः ।



त्रयमेतदर्ककुलवीर तवेदं तिलकाभिरामतममाननबिम्बम् ।
भ्रमरान्वितं च कमलं विधुबिम्बं समृगं मुदं वितनुते सरसानाम् ॥

वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः । प्रस्तुताप्रस्तुतानामेकधर्मान्वयो दीपकम् । तत्सरसावृत्तेनोदाहरतित्रयमिति । तल्लक्षणं तु "सजसागुरुश्च कथिता सरसैषेति । हे अर्ककुलवीर सूर्यवंशशूरराम इदं तिलकेनकस्तूरीविशेषकेणाभिरामतममत्यन्तसुन्दरं तवाननबिम्बं मुखमण्डलं भ्रमरेणान्वितं कमलं समृगं विधोश्चन्द्रस्य बिम्बंच एतत्त्रयं सरसानां रसिकानां मुदं वितनुते । अत्रप्रस्तुतस्य सतिलकराममुखस्याप्रस्तुतयोर्भ्रमरान्वितकमलमृगान्वितचन्द्रयोश्च रसिकाह्लादकरत्वक्रियान्वयः ॥ ६२ ॥

प्रभद्रकवृत्तं—पदावृत्तिदीपकं ।

धरति धनुः खलु भवान्प्रभद्रकं रघुकुलनीरधिमणे महारणे ।
धरति पुलस्त्यकुलजो भयाकुलः प्रविगलिताखिलविचेष्टितोऽपि सः ॥

त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकं । दीपकस्यानेकोपकारक्षमतया दीपस्थानीयस्य पदस्यार्थस्योभयोर्वाऽऽवृत्तौ त्रिविधमावृत्तिदीपकं । तत्र पदावृत्तिदीपकं प्रभद्रकवृत्तेनोदाहरतिधरतीति । तल्लक्षणन्तु "भवति नजौ च सजगाः प्रभद्रकमिति" । रघुकुलमेव नीरधिः समुद्रस्तत्रोत्पन्नमणेरत्नराम भवान् महतिरणे प्रकृष्टंभद्रंयस्मात्तत्प्रभद्रकम् लोकमङ्गळजनकम् । धनुः धरतिगृह्णातिखलु सःप्रसिद्धः पुलस्त्यकुलजः रावणोऽपि भयेनाकुलःव्याकुलः प्रविगलितंविनष्टमखिलंविचेष्टितंप्रयत्नः यस्यतथाभूतस्सन् धरतिधरःपर्वतइवाचरतिस्तब्धोभवतिअत्रधरतिधरतीतिशब्दावृत्तिः ॥

अपराजितावृत्तम्—अर्थावृत्तिदीपकम् ।

सति रघुवृषभे धनुर्भृति वानरी विसृजति विपदं चमूरपराजिता ।
स्थितिमपि विजहाति राक्षसवाहिनी भियमपि भुवनं विमुञ्चतिरावणात् ॥

अर्थावृत्तिदीपकमपराजितावृत्तेनोदाहरति । सतीति । तल्लक्षणंतु "ननरसलघुगैस्स्वरैरपराजितेति" रघुवृषभेरामे धनुर्भृति धनुर्धरतिसति अपराजिताकेनाप्यनभिभूता वानरीवानराणामियं चमूस्सेना विपदमापदंविसृजतित्यजति । राक्षसानां वाहिनीसेना-स्थितिमपि विजहातित्यजति । भुवनमपिरावणाद्भियंभयंविमुञ्चतित्यजति । अत्रत्यागरूपार्थावृत्तिः ॥ ६४ ॥

वसन्ततिलकवृत्तम्—उभयावृत्तिदीपकम् ।

सिंहोद्धतो रघुपतिः किरते शराली रुद्धर्षिणी ररिचमूः प्रति युद्धरङ्गे ।
अभ्राद्वसन्ततिलकप्रभमन्दहासा शोभावती सुरततिः किरते सुमालीः ॥

उभयावृत्तिदीपकं वसन्ततिलकवृत्तेनोदाहरति सिंहेति । तल्लक्षणंतु "उक्तंवसन्ततिलकं तभजाजगौगः सिंहोद्धतेयमुदिता मुनिकाश्यपेन । उद्धर्षिणीति कथिता मुनिसैन्धवेन शोभावतीतु कथिताभुजगाधिपेन" इति सिंहवदुद्धतउद्भटः रघुपतिः युद्धरङ्गे-रणभूमौ उद्धर्षिणीरधिकहर्षवतीररीणांचमूस्सेनाः प्रति शराणा-मालीस्ततीः किरतेविकिरति । वसन्तेजातंतिलकं तिलकपुष्पंत-स्येवप्रभाकान्तिर्यस्यतथाभूतोमन्दहासोयस्यास्तथाभूता । शोभावतीकान्तियुक्ता सुराणांतति रभ्रादाकाशात्सुमानांपुष्पाणामाली-स्ततीः किरतेविकिरति अत्रोभयावृत्तिः । आवृत्तीनां प्रस्तुताप्रस्तु-तोभयविषयत्वाभावेऽपि दीपकच्छायापत्तिमात्रेण दीपकव्यपदेशः ॥

प्रहरणतिलकवृत्तम्—प्रतिवस्तूपमा साधर्म्येण ।

द्युतिजितकुसुमप्रहरणतिलकं रघुवर मुखभां प्रगुणयति तव ।



मधुकरवटुक स्सलिलरुहगतां प्रबलयति रुचिं नहि किमु नितराम् ॥

वाक्ययोरेकसामान्येप्रतिवस्तूपमामता । यत्रोपमानोपमेय-परवाक्ययोरेकस्समानोधर्मः पृथङ्निर्दिश्यते सा प्रतिवस्तूपमा । प्रतिवस्तु प्रतिवाक्यार्थमुपमा समानधर्मोस्यामितिव्युत्पत्तेः साध-र्म्येण प्रतिवस्तूपमां प्रहरणतिलकवृत्तेनोदाहरति । द्युतीति तल्लक्षणं तु "ननभनलघुगाः प्रहरणतिलकमिति" द्युत्याकान्त्याजितः कुसुमप्रहरणः कामोयेन तस्य सम्बुद्धिः द्युति...रण हेरघुवर तव मुखगतंकस्तूरीतिलकं तवमुखस्यभांकान्तिं प्रगुणयतिवर्धयति । मधुकरवटुकः कमलगतः भ्रमरशिशुः सलिलरुहं कमलं गतां-श्रितांरुचिंशोभां नितरांभृशं नहिप्रबलयतिकिमु नवर्धयतिकिम्-वर्धयत्येव । अत्रप्रगुणयतिप्रबलयतीत्येकएवधर्म उपमानोपमेयवा-क्ययोः पृथग्भिन्नपदाभ्यां निर्दिष्टः ॥ ६६ ॥

इन्दुवदनावृत्तम्—प्रतिवस्तूपमा वैधर्म्येण ।

इन्दुवदनाम्बुरुहबन्धुकुलसूनो वेद तव सर्वगुणमेव निगमान्तः ।
विष्णुपदमध्यतलराजदमृतांशो र्वेत्ति नहि कुत्रचन बिम्बरुचिमन्धः ॥

वैधर्म्येण प्रतिवस्तूपमामिन्दुवदनावृत्तेनोदाहरति इन्द्विति । तल्लक्षणंतु "इन्दुवदना भजसनैस्सगुरुयुग्मैरिति" इन्दुवदनचन्द्र-मुख अम्बु....सूनो सूर्यवंशपुत्रराम निगमान्तः वेदान्तएव तवसर्व-गुणंअपहतपाप्मत्वादिकं वेदजानाति विष्णुपदस्याकाशस्यमध्यतले-राजतः प्रकाशमानस्य अमृतांशोश्चन्द्रस्य बिम्बरुचिंमण्डलशोभा-मन्धः कुत्रचनक्वापि नहिवेत्तिनजानाति । अत्रवेद नवेत्तीतिवैधर्म्ये-णधर्मोनिर्दिष्टः ॥ ६७ ॥

कुटिलवृत्तं—दृष्टान्तालंकारस्साधर्म्येण ।

तिष्ठन्त्वन्ये त्रिदिवपरमभारा देवा रामैकस्त्वं विपदपनयनाद्देवेशः ।
पक्षिष्वन्येष्वमितगणयुतेष्वेवैकः सौपर्णेयः कुटिलगदलनात्पक्षीशः ॥

चेद्बिंबप्रतिबिंबत्वं दृष्टान्तस्तदलंकृतिः । यत्रोपमानोपमेयवाक्ययोर्भिन्नावेव धर्मौ बिंबप्रतिबिंबभावेन निर्दिष्टौतत्रदृष्टान्तालंकारः । साधर्म्येणदृष्टान्तंकुटिलवृत्तेनोदाहरति तिष्ठन्त्विति तल्लक्षणन्तु "संप्रोक्तंम्भौकुटिलमिहहिनोयोगोग" इति हेराम त्वदन्येदेवास्त्रिदिवस्यस्वर्गस्यपरमभाराअत्यन्तभारभूतास्तिष्ठन्तु त्वमेकएव विपदपनयनादापन्निवारणाद्देवेशोदेवानामीश्वरोसि । अन्येष्वमितैरसंख्यातैर्गणैस्संघैर्युतेषुयुक्तेषुपक्षिषु सत्स्वपि सौपर्णेयोगरुडएकएव कुटिलगानांसर्पाणांदलनान्नाशनात्पक्षीशःपक्षिराजः । अत्रापन्निवारणसर्पदलनयोर्देवेशत्वपक्षीशत्वयोश्च बिंबप्रतिबिंबभावः ॥ ६८ ॥

ललितावृत्तं—दृष्टान्तालंकारो वैधर्म्येण ।

पदमटवीतलेषु भवता निहितं रघुवर तत्क्षणं निशिचरा निहताः ।
न भजति यावदेष ललितांबुधरो गगनमवग्रहा विदधते वसतिम् ॥

वैधर्म्येणदृष्टान्तंललितावृत्तेनोदाहरति पदमिति तल्लक्षणन्तु "नजभजलागुरुश्चललिता कथितेति" हेरघुवरभवता अटवीतलेषुवनप्रदेशेषु पदंचरणंनिहितंनिक्षिप्तं तत्क्षणंतस्मिन्नेवक्षणेनिशिचराराक्षसानिहताविनाशिताः एषः ललितोरम्यः अंबुधरोमेघः गगनंनभोयावन्नभजतिनप्राप्नोति तावदेवावग्रहाः वर्षप्रतिबन्धाः वसतिंवासंविदधतेकुर्वन्ति । अत्रारण्याधिकरणकरामपदनिधानराक्षसहननयोर्मेघगगनानागमनावग्रहवसत्योश्च यथाक्रमंवैधर्म्येण बिंबप्रतिबिंबभावः ॥ ६९ ॥

कलभाषिणी—वाक्यार्थैक्यारोपरूपा निदर्शना ।



कलभाषिणीषु जनकात्मजाया जगत्यपरासु कान्त रघुनाथ या ते रतिः ।
मधुमासि चूतलतिकामतल्लीतरव्रततीषु कोकिलवरस्य सेयं स्थितिः॥७०॥

वाक्यार्थयोस्सदृशयोरैक्यारोपोनिदर्शना । तांकलभाषिणीवृत्तेनोदाहरति कलेति तल्लक्षणन्तु "सजसा यलौच कलभाषिणी स्याद्गुरु"रिति कान्तसुन्दरहेरघुनाथ जगतिजनकात्मजायास्सीतायाः अपरास्वन्यासु कलभाषिणीषुमधुरवादिनीषुस्त्रीषु तेतवयारतिरासक्तिस्सेयं कोकिलवरस्यपरभृतश्रेष्ठस्यमधुमासिचैत्रमासे चूतलतिकामतल्लिकायाः प्रशस्तचूतलतायाइतरासुव्रततीषुलतासु स्थितिर्वसतिः । अत्ररामनिष्ठसीतेतरस्त्रीरतिरूपोपमेयवाक्यार्थस्य कोकिलनिष्ठचूतलतेतरलतास्थितिरूपोपमानवाक्यार्थस्यच यत्तच्छब्दाभ्यामैक्यारोपः ॥ ७० ॥

अलोलावृत्तं—पदार्थैक्यारोपरूपा निदर्शना ।

आदित्यान्वयसूनो सीतास्यांबुजभानो स्वामिन्राघव वक्त्रे भावत्के रमणीये ।
यायास्तावदलोलाश्छायासंहतयस्ताः शारद्यां सितरात्र्यां राजन्ते शशिबिंबे

पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम् । तामलोलावृत्तेनोदाहरति आदित्येति तल्लक्षणन्तु "द्विस्ससच्छिदलोला स्सौम्भौगौचरणे चे"दिति आदित्यान्वयसूनोस्सूर्यवंशपुत्र सीतायाआस्यंमुखमेवांबुजंतस्यभानोरवे स्वामिन्प्रभो राघवराम रमणीयेसुन्दरेभावत्केत्वदीयेवक्त्रेमुखे यायास्तावत् छायासंहतयः कान्तिततयस्ताश्शारद्यांसितरात्र्यांशरत्कालशुक्लपक्षरात्रौ शशिबिंबेराजन्तेभान्ति। अत्रशारदचन्द्रे राममुखगतकान्तिपदार्थारोपो निंदर्शना ॥

कुमारीवृत्तं—असदर्थनिदर्शना ।

रघुवर मैथिलस्य नृपतेः कुमारीं तव वनितां प्रकाम्य परमास्पदस्थः ।

व्रजति दशाननो मृतिमितीरयन्यः पररमणीच्छुराशु स जनः प्रणश्येत् ॥

अपरं बोधनं प्राहुः क्रियया ऽसत्सदर्थयोः । कस्यचित्किंचित्क्रियाविशिष्टस्य स्वक्रियया परान्प्रत्यसतस्सतोवाऽर्थस्य बोधनंयन्निबध्यतेतदपरांनिदर्शनामाहुः । तत्रासदर्थनिदर्शनां कुमारीवृत्तेनोदाहरति रघ्विति तल्लक्षणन्तु "नजभजगैर्गुरुश्च वसुषट्कुमारी"ति । हेरघुवर तव वनितांभार्यां मैथिलस्यनृपतेर्जनकराजस्यकुमारींपुत्रींसीतां प्रकाम्यकामयित्वा परमास्पदस्थः परमेश्रेष्ठेआस्पदेस्थानेस्थितोपि दशाननोरावणः यः जनः परस्यान्यस्यरमणींवनितामिच्छुस्सआशुशीघ्रंप्रणश्येद्विनष्टोभवेदितीरयन्कथयन्मृतिंनिधनंव्रजतिगच्छति । अत्ररामभार्यांप्रकाम्यस्वयंमृतिविशिष्टोरावणः स्वविनाशक्रिययादृष्टान्तभूतयान्योप्येवंपररमणीच्छुश्चेत्प्रणश्येदित्यनिष्टपर्यवसायिनमर्थंकथयन्नेवमृतिंगच्छतीत्यर्थनिबन्धनादसदर्थनिदर्शना ॥ ७२ ॥

मञ्जुभाषिणी—सदर्थनिदर्शना ।

सततं प्रिया भवति मञ्जुभाषिणी च त्रिजटा निशाचरवधूषु रामपत्न्याम्
निगदन्त्यसाविति हि यस्य सुष्ठु भावः सुहृदुद्भवेद्रिपुगणेषु कोपि तस्य ॥

सदर्थनिदर्शनां मञ्जुभाषिणीवृत्तेनोदाहरति सततमिति तल्लक्षणन्तु "सजसाजगौगितिचमञ्जुभाषिणीस्यादि"ति । यस्यजनस्यभावः अभिप्रायः सुष्ठुसमीचीनः तस्यरिपूणांगणेष्वपि कोपिसुहृन्मित्रं उद्भवेज्जायेतेतिनिगदन्तीबोधयन्त्यसौ निशाचरवधूषुराक्षसस्त्रीषु त्रिजटातदाख्याकाचिद्राक्षसीरामस्यपत्न्यांसीतायांसततंप्रियाप्रीतिमतीमञ्जुभाषिण्यनुकूलवादिनीचभवति अत्रत्रिजटा दुष्टराक्षसीमध्येसीताप्रीतिमादधाना स्वयासीताप्रीत्याधानक्रियया



परान्प्रतिसाधुभावश्शत्रुमध्येपिसुहृदंसंपादयेदितिश्रेयस्करमर्थंबोधयन्तीनिबद्धेतिसदर्थनिदर्शना ॥ ७३ ॥

सुकेसरवृत्तं—उपमेयाधिक्यपर्यवसायी व्यतिरेकः ।

दशरथात्मजाननमिदं तव प्रभो हसितकौमुदीरुचिसुकेसरं तथा ।
विमलमण्डलं कुवलयप्रियं सदा शशिवदेधते ह्यपि तु मित्रदर्शने ॥ ७४ ॥

व्यतिरेकोविशेषश्चेदुपमानोपमेययोः । उपमेयाधिक्यपर्यवसायिनंव्यतिरेकंसुकेसरवृत्तेनोदाहरति दशेति तल्लक्षणन्तु "नरनरैर्लगौचललितंसुकेसर" मिति । प्रभोदशरथात्मजराम तवेदमाननंशशिवच्चन्द्रवत् हसितंहासएवहसितवच्चकौमुदीचन्द्रिकातस्यारुच्याकान्त्यासुकेसरंशोभनसटावत् तथाविमलमण्डलंस्वच्छबिंबं कुवलयस्यभूमण्डलस्यकुवलयानामिन्दीवराणांचप्रियं अपितुमित्रस्यसुहृदःखेश्चदर्शनेएधतेवर्धते । अत्रमित्रदर्शनेवृद्धिरहितादुपमानभूतचन्द्रात्तत्रवृद्धिमतोराममुखस्योपमेयस्याधिक्यम् ॥ ७४ ॥

मदनार्तावृत्तं उपमेयन्यूनत्वपर्यवसायी व्यतिरेकः ।

चक्राह्वय सम्यङ्मदनार्तान्तरसीमा कामं वनमध्याटनकर्मा शशिरोषी ।
रामः प्रियभार्याप्रवियुक्तस्त्वमिवाहं वर्तेऽपितु पक्षिन्नविपक्षी न वनेऽस्मिन्

उपमेयन्यूनत्वपर्यवसायिनंव्यतिरेकंमदनार्तावृत्तेनोदाहरति चक्रेति तल्लक्षणन्तु "अन्तेगुरुयुग्मंत्यसभाश्चेन्मदनार्तेति" हेचक्राह्वयचक्रवाकपक्षिन् त्वमिवरामोहंप्रिययेष्टयाभार्ययाप्रवियुक्तोविरहितः सम्यक् मदनेनकामेनार्तापीडिताअन्तरसीमामनोदेशोयस्यतथाभूतः कामंभृशं वनस्यकाननस्यजलस्यचमध्येअटनकर्मसंचरणक्रियायस्यतथाभूतः शशिनेचन्द्रायरोषीकोपवांश्च । अपितु अस्मिन्वनेहेपक्षिन् विगतौपक्षौविपक्षौअस्यस्तइतिविपक्षी विपक्षश्शत्रुर-

स्यास्तीतिविपक्षीच नवर्तइतिन किन्तुविपक्षीवर्ते । अत्रोपमेयस्य-पक्षरहितत्वेनापकर्षः ॥ ७५ ॥

रजनीवृत्तं—अनुभयपर्यवसायी व्यतिरेकः ।

रूपधेयपरिशोभिकलेबरसुन्दरो लोकमोहनगुणो रजनीशलसन्मुखः ।
राम एष स च मार इहापितु वर्णयोर्व्यत्ययः किल विभेदधियं कुरुते तयोः

अनुभयपर्यवसायिनं व्यतिरेकंरजनीवृत्तेनोदाहरति रूपेति तल्लक्षणन्तु "रोनभौच रजनीविबुधैःकथिता भरा" विति इहलोके-एषरामः सः मारः कामश्च रूपमेवरूपधेयंतेनपरिशोभिनाकलेबरेणदेहेनसुन्दरोरम्यः लोकमोहनाजगन्मोहकागुणायस्यतथाभूतः रजनीशवच्चन्द्रवल्लसद्राजन्मुखंयस्यतथाभूतश्चास्ति । अपितु तयोः राममारयोः वर्णयोर्वाचकशब्दाक्षरयोः रेफमकारयोर्व्यत्ययः किल-व्यतिक्रमएव विभेदधियंवैलक्षण्यबुद्धिं कुरुतेजनयतीत्यर्थः उपमा-नोपमेययोर्वाचकशब्दाक्षरविपर्यासंविना प्रकारान्तरेणसाम्यमेवेति-यावत् । तथाचानुभयपर्यवसायीउपमेयस्योत्कर्षापकर्षान्यतरपर्य-वसानरहितोव्यतिरेकः ॥ ७६ ॥

शशिकलावृत्तं—सहोक्त्यलंकारः ।

दशरथनृपवरतनय शशिकला तव मुखसविधत इव भयनिभृता ।
सह भवदरितमिचरवरनिकरैः प्रविशति चरमशिखरिविपिनतटम् ॥७७॥

सहोक्तिस्सहभावः [साहित्यं] चेद्भासते जनरञ्जनः । तांशशिकलावृत्तेनोदाहरति दशेति तल्लक्षणन्तु "द्विहतहयलघुरथगिति-शशिकलेति" चन्द्रास्तमयनवर्णनं दश⋯नय हेरामशशिकलाचन्द्रकला तवमुखस्यसविधतः निकटाद्भयेननिभृताव्याप्तेव भवतः अरीणांतमिचरवराणांराक्षसश्रेष्ठानांनिकरैस्सह चरमशिखरिणः अस्ताचलस्यविपिनतटंवनतलंप्रविशति । अत्र समन्वयः स्पष्टः ॥७७॥



स्रग्वृत्तं—विनोक्तिः प्रथमा विनाशब्दमन्तरेण ।

रघुकुलसुत बृहदपि च पटुतरं श्रुतियुगमपि नवकनकपरिकरम् ।
प्रपिबति तव न यदमलगुणसुमस्रगुदितमुरुमधु तदिह हि बधिरम् ॥

विनोक्तिश्च विना किंचित्प्रस्तुतं हीनमुच्यते । तांस्रग्वृत्तेनोदाति रघ्विति तल्लक्षणन्तु "स्रगितिभवतिरसनवकयतिरियमिति" हेरघुकुलसुतराम बृहन्महदपि पटुतरंच अतिशयेनशब्दग्रहणसमर्थ-मपि नवकनकपरिकरंनूतनसुवर्णभूषणपरिवृतमपि यत्श्रुतियुगंकर्णद्वयं तवअमलागुणाएवसुमानिपुष्पाणितेषांस्रङ्मालातस्याउदितमुद्गतमुरुअधिकंमधुमकरन्दं नप्रपिबति तत् श्रुतियुगमिहलोकेबधिरंबाधिर्ययुतंहि । अत्रप्रकृतस्यश्रुतियुगस्यरामगुणश्रवणंविनाबाधिर्यदुष्टत्वंविनाशब्दमन्तरादर्शितम् ॥ ७८ ॥

मणिगुणनिकरवृत्तं—विनोक्तिर्द्वितीया विनाशब्देनसह ।

जलमुगवृत इव शशिकरनिकरो रघुकुलवर तव गुणमणिनिचयः ।
कुकविजनमनसि गमनमिह विना जगति परिलसति नवनवललितः ॥

तच्चेत्किंचिद्विना रम्यंविनोक्तिस्सापि कथ्यते । [तत्प्रकृतं] तांमणिगुणनिकरवृत्तेनोदाहरति जलेति तल्लक्षणन्तु "वसुहययति-रिहगुणमणिनिकर" इति हेरघुकुलवरराम जलमुचामेघेनअवृतः अनाच्छादितः शशिनश्चन्द्रस्यकरनिकरःकिरणसमूहइव तवगुणमणीनांरत्नसदृशगुणानांनिचयोनिकरः कुकविजनानांकुत्सितकवीनां मनसिगमनंप्रवेशंविना इहजगतिनवनवः अतिशयेननूतनः ललितस्सुन्दरश्च परिलसतिराजति । अत्ररामगुणानांकुकविमनःप्रवेशं विना रम्यत्वं विनाशब्देनसहदर्शितम् ॥ ७९ ॥

मालिनीवृत्तं—समासोक्तिर्विशेषणसाम्यात् ।

रघुवर भवदंघ्रिं कान्तमत्यन्तरक्तं चिरविरहितमूर्मीमालिनीड्यप्रयाणम् ।
गुहमुखसखिराजश्रीकिरीटालिराप्तं निकटतटमकुस्यद्वज्रमुक्तातिपाण्डुः ॥

समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्यचेत् । यत्रप्रस्तुतवृत्तान्तेवर्ण्यमाने विशेषणसाम्यबलादप्रस्तुतवृत्तान्तस्यापि परिस्फूर्तिस्तत्रसमासोक्तिरलंकारः । समासेनसंक्षेपेणप्रस्तुताप्रस्तुतवृत्तान्तयोर्वचनात् । तांमालिनीवृत्तेनोदाहरति रघ्विति तल्लक्षणन्तु "ननमयययुतेयंमालिनीभोगिलोकै" रिति । हेरघुवरराम कान्तंकमनीयंनायकंच अत्यन्तंरक्तंरक्तवर्णमनुरक्तंच चिरंविरहितंवियुक्तंच ऊर्मीमालिनिसमुद्रे ईड्यप्रयाणंप्रशस्ययात्रं निकटतटंसमीपप्रदेशमाप्तंप्राप्तं भवतः अंघ्रिंचरणं वज्रैर्हीरैर्मुक्ताभिर्मौक्तिकैश्चवज्रवन्मुक्तावच्चातिपाण्डुरत्यन्तश्वेता गुहमुखागुहप्रमुखास्सखिराजामित्रश्रेष्ठास्तेषांश्रीकिरीटानांशोभायुतकोटीराणामालिस्तातिः अकुस्यत्सजतिस्मश्लिष्यतिस्मच । अत्रराज्याधिकारस्थितरामस्यकमनीयत्वरक्तत्वादिविशिष्टपादयोर्गुहादिप्रणामावसरे वज्रमुक्ताधवलतत्किरीटासङ्गनेप्रकृतेवर्ण्यमानेश्लिष्टविशेषणसाम्यादंघ्रिशब्दगतपुंलिंगद्योतितं कान्तत्वानुरक्तत्वादिविशिष्टमात्मनायकमाप्तं किरीटालिशब्दगतस्त्रीलिंगद्योतिता विरहपाण्डुराकृतिः काचित्सतीश्लिष्यतिस्मेत्यप्रस्तुतवृत्तान्तः प्रतीयते ॥ ८० ॥

चन्द्रलेखावृत्तं—सारूप्यादपि समासोक्तिः ।

यत्स्फूर्तौ रात्रिरासीत्पीयूषपाथोधिपूरः
साद्यायात्क्षीणरूपा व्यत्यस्ततामुत्पलेषु ।



हासाहासौ प्रयातौ चण्डांशुपर्केण राम
प्राणेश प्रापतत्खात्सिन्धावयं शीतभानुः ॥ ८१ ॥

प्रस्तुताप्रस्तुतसाधारणविशेषणबलादिव सारूप्यबलादपि समासोक्तिर्भवति तांचन्द्रलेखावृत्तेनोदाहरति यदिति तल्लक्षणन्तु "म्रौम्यौयाढ्यौ भवेतांसप्ताष्टभिश्चन्द्रलेखेति" प्रभातकालेरामंप्रतिसीतोक्तिरियं हेप्राणेशराम यस्यशीतभानोःस्फूर्तौप्रकाशेयारात्रिःपीयूषपाथोधेरमृतसमुद्रस्यपूरःप्रवाहआसीत्सारात्रिरद्यप्रभाते क्षीणरूपा विनष्टस्वरूपा अयाद्गतवती किंचाद्य चण्डांशोःरवेः पर्केणसंगेन उत्पलेषुकुमुदेषुपद्मेषुच हासाहासौविकाससंकोचौ व्यत्यस्ततांविपर्यासंप्रयातौगतौ सोयंशीतभानुश्चन्द्रः खादाकाशात्सिन्धौसमुद्रेप्रापतत्पततिस्म । अत्रप्रभातवर्णनेप्रस्तुते तत्सारूप्यादनुग्रराजकालेवृद्धिमतीराज्यस्थितिस्तद्विनाशेक्षीणस्थितिर्भवेदुग्रराज--कालेसंपदसंपदौपूर्वविपर्यस्ताश्रयेचेत्यप्रस्तुतवृत्तान्तःप्रतीयते ॥

ऋषभगतिविलसितवृत्तं परिकरः पदार्थरूपसाभिप्रायैकविशेषणः ।

त्वत्कक्रुपादृशः पुमृषभ गतिविलसितं
प्राप्य रघूत्तमाहमपि वनमृगचपलः ।
प्राज्यबलामपीन्द्रमुखसुरगणजयिनो
यातुपतेः पुरीं तु समतनवमनलसात् ॥ ८२ ॥

अलंकारः परिकरस्साभिप्रायेविशेषणे । तमृषभगतिविलसितवृत्तेनोदाहरति त्वत्केति तल्लक्षणन्तु "भ्रौत्रिनगाः स्वराः खमृषभगतिविलसित"मिति रामंप्रतिहनुमतउक्तिरियं पुमृषभपुरुषश्रेष्ठरघूत्तम वनमृगेषुकपिषु चपलःचंचलोप्यहं त्वत्कायास्त्वदीयायाः कृपादृशः करुणादृष्टेर्गतिविलसितंदशाविलासंप्राप्य इन्द्रेति इन्द्रा-

दिदेवगणजितोपि यातुपतेःरावणस्यप्राज्यबलामधिकसेनामपि पुरीं अनलसात्कात्स्न्यैंनानलमग्निमतनवमकरवं अत्रहनुमद्विशेषणंराव-णविशेषणंपुरीविशेषणंच्च दुर्बलत्वप्रबलत्वदुष्प्रधर्षत्वाभिप्रायगर्भम् ॥

वाणिनीवृत्तं परिकरः पदार्थरूपसाभिप्रायानेकविशेषणः ।

रघुवृषभं गुणाकरमुदारतासमुद्रं
सकलजगत्पतिं सरसमौज्झ्य सन्नता त्वम् ।
नरमलिनं सुदुर्गुणमुदीडितुं प्रलुब्धं
कतिपयमर्त्यप भवसि वाणि नीरसं हा ॥ ८३ ॥

पदार्थरूपसाभिप्रायानेकविशेषणं परिकरंवाणिनीवृत्तेनोदाहर-ति रघ्विति तल्लक्षणन्तु "नजभजरैस्सदाभवतिवाणिनीगयुक्तैरिति" हेवाणि गीः त्वंगुणाकरंसद्गुणास्पदंउदारतासमुद्रंऔदार्यजलधिं सकलजगतांपतिंसरसमाश्रितेषुसप्रीतिंरघुवृषभंरघुवंशश्रेष्ठंरामंऔ-ज्झ्यविहाय सुष्ठुदुर्गुणंअसद्गुणास्पदं प्रकर्षेणलुब्धंलोभवन्तं कतिप-यमर्त्यपतिं नीरसमाश्रितेषुनिष्प्रीतिंनरमलिनंनरेष्वशुद्धं उदीडितुं-स्तोतुं सन्नतासन्नद्धाभवसिहाकष्टम् । अत्ररघुवृषभनरमलिनगत-बहुविशेषणानितयोरीडनार्हत्वानर्हत्वाभिप्रायगर्भाणि ॥ ८३ ॥

अश्वगतिवृत्तम्—परिकरःवाक्यार्थरूपसाभिप्रायविशेषणः ॥

आसमहं नहि कैटभमर्दनतल्पवरः
वक्तुलमलं तव रम्यगुणान्रघुवीर कथम् ।
नाकरवं शतमश्वगतिप्रथमांश्च मखा-
नीक्षितुमीश कथं प्रभवामि भवत्तनुभाम् ॥ ८४ ॥

वाक्यार्थरूपसाभिप्रायविशेषणंपरिकरमश्वगतिवृत्तेनोदाहर-ति । आसमिति । तल्लणंतु । "पञ्चभकारकृताश्वगतिर्यदि चान्त-



गुरुरिति"। हेरघुवीर ह्रियतः अहंकैटभमर्दनस्यविष्णोः तल्पवरः श्रे ष्ठशय्यायितश्शेषः नासंनाभवम् ततःतवरम्यान्गुणान्वक्तुंकथंअलं-समर्थः अस्मि हेईशअश्वस्यगतिः संवत्सरसञ्चारः प्रथमापूर्वायेषांता-न्शतंमखानश्वमेधक्रतून्नाकरवंनानुष्ठितवानासं ततोभवतस्तनोर्देह-स्यभांकान्तिंईक्षितुं आलोकितुंकथंप्रभवामिसमर्थोभवामि । अत्रना-हमासंविष्णुशय्या नाकरवंशतमश्वमेधानितिवाक्यार्थरूपेविशेषणे स्वस्मिञ्छेषेन्द्रासाधारणकार्यकर्तृत्वप्रतिषेधमुखेन नाहंशेषइन्द्रश्चे-त्यभिप्रायगर्भे ॥ ८४ ॥

पञ्चचामरवृत्तम्—परिकराङ्कुरः ।

रघूत्तमाप्रमेयसद्गुणप्रपञ्चचामराः
अपि त्वदीयसद्विभूतिमीशते महीयसा ।
अनेहसा न बोधितुं कथञ्चनाथ मर्त्यक-
स्तनीयसाऽऽयुषा हि तामवैतुमीश्वरः किमु ॥ ८५ ॥

साभिप्रायेविशेष्येतुभवेत्परिकराङ्कुरः । तंपञ्चचामरवृत्तेनोदा-हरति । रघ्विति । तल्लक्षणंतु "लघुर्गुरुर्निरन्तरंभवेद्विपञ्चचामर-मिति" । अप्रमेयः प्रमातुमशक्यस्सद्गुणानां प्रपञ्चोविस्तारोयस्य-तस्यसम्बुद्धिरप्रमेयसद्गुणप्रपञ्च हेरघूत्तम अमरामरणरहितादेवाश्च महीयसाअतिमहता अनेहसाकालेनापि कथंचन कथमपित्वदीयां-सतीं श्रेष्ठांविभूतिंमहिमानंबोधितुंज्ञातुं नेशतेसमर्थानभवन्ति । अथम्रियतइतिमर्त्यःमरणयुक्तःअल्पःमर्त्योमर्त्यकः तनीयसाअत्य ल्पेनायुषावयसा तांत्वदीयसद्विभूतिमवैतुंज्ञातुमीश्वरः किमुसमर्थः किं । अत्रमर्त्यकइतिअमराइतिविशेष्यद्वयं भगवद्विभूतिबोधनप्रति-बन्धकमरणतदभावविशिष्टत्वाभिप्रायगर्भम् ॥ ८५ ॥

शैलशिखावृत्तम्—प्रकृतानेकविषयश्लेषः ।

वीक्ष्य रघूत्तमं विजयिनं विबुधा विविधाः
नन्दनवन्यतिप्रियहृदस्समरुद्भवकाः ।
भास्करजातकान्तिभरिताश्च सुवर्णलस-
च्छैलशिखाकरा मुमुदिरे हरिमुख्यतमाः ॥ ८६ ॥

नानार्थसंश्रयःश्लेषोवर्ण्यावर्ण्योभयाश्रितः । अनेकार्थशब्द-विन्यासःश्लेषः । सचत्रिविधः । प्रकृतानेकविषयः अप्रकृतानेक-विषयः, प्रकृताप्रकृतानेकविषयश्च । तत्रप्रकृतानेकविषयश्लेषंशैल-शिखावृत्तेनोदाहरति । वीक्ष्येति । तल्लक्षणंतु "शैलशिखाभरौनभ-भगाः कथितामुनिनेति" । विजयिनंविजयवन्तंरघूत्तमंवीक्ष्य विशे-षेणबुध्यन्तइतिविबुधाविशेषज्ञानवन्तःदेवाश्च विविधाःनानाविधाः नन्दयतीतिनन्दन्यानन्दजननी या वनीवनंतत्रातिप्रियंहृन्मनोयेषांत-थाभूताः नन्दनाख्यदेवोद्यानातिप्रियमानसाश्च समरुद्भवकाःवायुपु-त्रसहिताःमरुद्भिःभवेनरुद्रेण केनब्रह्मणाचसहिताश्च । भास्करजा-तेसुग्रीवेकान्त्येच्छयाभरिताःपूर्णाःभास्करजातस्यसूर्यबृन्दस्येवका-न्त्याभासाभरिताश्च । सुवर्णंकनकमिवलसन्तःप्रकाशमानाःशैला-नांशिखा अग्रमाकरआस्पदंयेषांतथाभूताः सुवर्णेनलसन्शैलोमेरुः-तच्छिखरवासाश्चहरिषुवानरेषुमुख्यतमाःअतिमुख्याः हरिरिन्द्रोमु-ख्यतमोयेषांतथाभूतादेवाश्चमुमुदिरेमोदन्तेस्म । अत्रसन्तोषविशिष्ट-त्वेनप्रकृतानांवानराणांदेवानांचकीर्तनंप्रकृतश्लेषः ॥ ८६ ॥

शिखरिणीवृत्तम्—अप्रकृतानेकविषयश्लेषः ।

रघूत्तंस श्रीमन्त्वदुपमितिकक्ष्यां जगति कः
विशेत्स्याच्चेन्नोमाजनिरुपनतानन्तसुमनाः ।





अरिष्टान्तर्भावः करधृतमहामेरुशिखरि-
ण्यशेषव्यामोहाचरणपटुशक्त्यायुधधरः ॥ ८७ ॥

अप्रकृतानेकविषयश्लेषंशिखरिणीवृत्तेनोदाहरति । रघ्विति । तल्लक्षणंतु "रसैरुद्रैश्छिन्ना यमनसभलागश्शिखरिणीति" । हे-श्रीमन्रघूत्तंस उपनताविनताः नम्रिताश्चअनन्ताअसंख्यास्सुमनसः देवाः पुष्पाणिचयस्मिन्येनचतथाभूतः । करधृतः महामेरुरितिशि-खरीपर्वतोयेनतस्मिञ्छिवे अरिष्टश्शुभः अशुभश्चान्तर्भावः मनो-भिप्रायोयस्यतथाभूतश्च अशेषाणांसमस्तानांव्यामोहाचरणेविशेष-मोहकरणेपटुसमर्थंशक्त्याख्यमायुधंतस्यधरः अशेषव्यामोहाचर-णपटुश्शक्तिर्वीर्यंयस्यतथाभूतस्यपुष्पायुधस्यधरश्च । उमाजनिर्गु-होनस्याच्चेत् माजनिःप्रद्युम्नोनोस्याच्चेत् जगतिकः तवउपमितिक-क्ष्यांउपमानवस्तुमध्यंविशेत्प्रविशेत् । अत्रोपमानत्वेनाप्रकृतयोर्मार-कुमारयोः कीर्तनमप्रकृतश्लेषः ॥ ८७ ॥

पृथ्वीवृत्तम्—उभयानेकविषयश्लेषः ।

सदालिषु सदावसन्कुवलयं समुन्मीलयन्
जडात्मकमिदं भृशं समुदयेन संवर्धयन् ।
स्वपादसरणोल्लसच्छिखरसर्वपृथ्वीधरः
करोति मृदु तारराड्द्रवयुतश्च सीतान्तरम् ॥ ८८ ॥

उभयानेकविषयश्लेषंपृथ्वीवृत्तेनोदाहरति । सदिति । तल्लक्ष-णंतु "जसौजसयलावसुग्रहयतिश्चपृथ्वीगुरुरिति" सतांसाधू-नांनक्षत्राणांचआलिषुततिषुसदावसन् कुवलयंभूमण्डलंउत्पलंच-सम्यगुन्मीलयन्विकासयन्भृशंकामंसम्यगुदयेनदीप्त्याअभ्युदयेन-वाउद्गत्याचजडात्मकंप्रायेणाज्ञप्रकृतिकंइदंजगदिदंजडात्मकंजल-

स्वरूपंच जडात्मशीतस्वभावंकंजलंचवा वर्धयन्स्वपादयोस्स्वचर-णयोस्सरणंशरणागतिस्स्वपादानांनिजकिरणानांसरणंप्रचारश्चतेलो-ल्लसन्तिशोभमानानिशिखराणिशिरांसिकूटानिचयेषांतथाभूताः स-र्वेपृथ्वीधराः राजानः पर्वताश्चयस्यतथाभूतस्तारराट्तारेऽभिधा-नभूतेप्रतीकभूतेवाप्रणवेअभिधेयत्वेनराजतइतितारराट्तारमन्त्रार्थः श्रीरामःनक्षत्रराजश्चन्द्रश्च सीतायाजानक्याःलाङ्गलपद्धतेश्चान्तरं-मनः मध्यंच मृदुकोमलंमार्दवयुक्तंच द्रवेणशृङ्गाररसेननर्मणावा-जलद्रवेणचयुतंकरोति । अत्र रामवर्णनंप्रकृतंचन्द्रवर्णनमप्रकृतमि-तिप्रकृताप्रकृतश्लेषः ॥ ८८ ॥

अतिशायिनीवृत्तम्—सारूप्यनिबन्धनाअप्रस्तुत (स्तुति) प्रशंसा ।

नवमालतिके मनोहरान्वयवतोऽप्ययि त्वं
सहकारतरोर्दृढोपगूहनसुखातिदूरा ।
विषवल्लिवृताऽपि कण्टकव्यथितमूर्तियुक्ता
न जगत्यतिशायिनीं जहासि सुषमामहत्ताम् ॥ ८९ ॥

अप्रस्तुतप्रशंसास्यात्सायत्रप्रस्तुताश्रया । यत्राप्रस्तुतवृत्तान्त-वर्णनंप्रस्तुतवृत्तान्तावगतिपर्यवसायितत्राप्रस्तुतप्रशंसालङ्कारः। अ-प्रस्तुतवृत्तान्तवर्णनेनप्रस्तुतावगतिश्चप्रस्तुताप्रस्तुतयोस्संबन्धेसति-भवति । संबन्धश्चसारूप्यंसामान्यविशेषभावः कार्यकारणभावोवा-संभवति । तत्रसामान्यविशेषभावेसामान्याद्विशेषस्यविशेषाद्वासा-मान्यस्यावगतौद्वैविध्यं । कार्यकारणभावेऽपिकार्यात्कारणस्यकार-णाद्वाकार्यस्यावगतौद्वैविध्यम् । सारूप्येत्वेकोभेदइत्यस्याःपञ्चप्र-काराः। तत्रसारूप्यनिबन्धनां अप्रस्तुत (स्तुति) प्रशंसामतिशायि-नीवृत्तेनोदाहरति । नवेति । तल्लक्षणंतु “ससजाअतिशायिनीभ-जौगुरुयुगीसमेताविति” । मालतीव्याजेनसीतांप्रतिहनूमदुक्तिः ।



अयिहेनवमालतिकेनूतनजातिलतेत्वं मनोहरान्वयवतोरम्यवंशवतः सहकारतरोश्चूतवृक्षस्यदृढोपगूहनसुखाद्गाढालिङ्गनजातसुखाद-तिदूरा विप्रकृष्टाऽपि विषवल्लिभिर्विषलताभिर्वृतापरिवृताऽपि क-ण्टकैर्व्यथितयापीडितयामूर्त्यादेहेनयुक्ताऽपि जगत्यतिशायिनीम-तिशयितां सुषमामहत्तांकान्तिमहत्वं नजहासिनत्यजसि । अत्राप्र-स्तुतमालतीप्रशंसा प्रशंसनीयत्वेनप्रस्तुतायांतत्सरूपायांप्रकृष्टवंश-जरामालिङ्गनदूरायांराक्षसीवृतायांरावणस्पर्शपीडितदेहायामप्य-तिशयितकान्तिमत्यजन्त्यांसीतायांपर्यवस्यति ॥ ८९ ॥

वंशपत्रपतितवृत्तम्—सारूप्यनिबन्धनाप्रस्तुत (निन्दा) प्रशंसा ।

कण्टकवंश पत्रपतितद्विजनिकरयुतोऽ-
प्यङ्कुरशाखिकाभिरतुलां विततिमपि गतः ।
त्वं बहुपाद्यथा प्रभवसि प्रकटरविकर-
स्तोमसुतप्ततापहरणे जगति खलु किमु ॥ ९० ॥

सारूप्यनिबन्धनाप्रस्तुत (निन्दा) प्रशंसांवंशपत्रपतितवृत्तेनो-दाहरति । कण्टकेति । तल्लक्षणंतु “दिङ्मुनिवंशपत्रपतितं भ-रनभनलगैरिति । कण्टकवृक्षव्याजेनरावणंप्रतिहनुमदुक्तिः । हेक-ण्टकवंश कण्टकनिबिडवेणुवृक्ष पत्रेषुपर्णेषुपतितैर्द्विजनिकरैःप-क्षिसमूहैर्युतोऽपि अङ्कुरैरभिनवोद्भिद्भिःपल्लवैर्वाशाखिकाभिः-शाखाभिश्चअतुलामसमांवितर्तिव्याप्तिंगतोऽपि त्वं बहुपाद्यथा-वटवृक्षइव जगति प्रकटेनोग्रेणरविकरस्तोमेनसूर्यकिरणजालेनसु-तप्तानांतापहरणे प्रभवसिखलुकिमुसमर्थोभवसिकिम् । अत्रक-ण्टकवृक्षनिन्दा निन्दनीयत्वेनप्रस्तुतेतत्सरूपेसहाययुतेऽपिपुत्रपौ-त्रादिसन्ततिनिबिडेऽपिरामवदाश्रिततापमपहर्तुमक्षमेरावणेपर्यव-स्यति ॥ ९० ॥

सारूप्यनिबन्धना स्वरूपाख्यानमात्रपराप्रस्तुतप्रशंसा ।

सारङ्ग्येषा स्वगणगलिता कृष्णसारेण हीना
दूराद्दूरं किल पलभुजा सारमेयेण नीता ।
वृक्या बह्व्या भृशपरिवृता तत्कथं नो बिभीया-
न्मन्दाक्रान्ताऽप्यधिकतरला या पुरा तद्रवेण ॥९१॥

अप्रस्तुतप्रशंसेत्यत्रप्रशंसाशब्दः स्तुतिनिन्दास्वरूपाख्यानसाधारणकीर्तनमात्रपरः । पूर्वोदाहरणयोः स्तुतिनिन्दारूपाप्रस्तुतकीर्तनम् । इदानीं (स्तुतिनिन्दोदासीन) स्वरूपाख्यानमात्रपरांसारूप्यनिबन्धनामप्रस्तुतप्रशंसांमन्द्राक्रान्तावृत्तेनोदाहरति । सारङ्गीति । तल्लक्षणंतु "मन्द्राक्रान्ता जलधिषडगैर्म्भौनतौतोगुरूचेदिति"। सारङ्गीव्याजेनसीतामुद्दिश्यहनुमदुक्तिः एषासारङ्गीमृगीस्वगणात् स्वयूथाद्गलिताभ्रष्टा कृष्णसारेणपत्यामृगेणहीनारहिता पलभुजामांसाशिनासारमेयेणशुनाकिलदुराद्दूरंविप्रकृष्टदेशाद्विप्रकृष्टदेशंनीताप्रापिता बह्व्याअनेकयावृक्यावृकाख्यश्वभेदस्त्रियाभृशंकामंपरिवृताचास्ति तत्तस्मात्कारणात्कथंनोबिभीयाद्भीतिंनगच्छेत् यासारङ्गीपुरातस्याःवृक्यारवेणशब्देन मन्दंकिञ्चिदाक्रान्ताव्याप्ताऽप्यधिकंयथाभवतितथातरलाभयकम्पिताऽभूत् । अत्रसारङ्गीवृत्तान्तकीर्तनंतत्सरूपायांस्वराज्यभ्रष्टायांरामविरहितायांरावणेनाशोकवनंनीतायांराक्षसीवृतायांभीतिमत्यांसीतायां पर्यवस्यति ॥९१॥

हरिवृत्तम् (हरिणीवृत्तम्)—सामान्यनिबन्धनाप्रस्तुतप्रशंसा ।

भुवनमहितात्संजातोऽपि स्वयं खलु वंशतो
गुणमणिगणैरन्यानाप्यैः पुनः परिशोभितः ।
हरिसमबलः श्रीमांश्चापि प्रतीपतरे विधौ
विपदममितां प्राप्नोत्येव प्रजल्पितुमक्षमाम् ॥ ९२ ॥



सामान्यनिबन्धनामप्रस्तुतप्रशंसांहरिवृत्तेनोदाहरति भुवनेति । तल्लक्षणंतु "रसयुगहयैर्न्सौम्रौस्लौगोयदाकथितोहरिरिति"। स्वयंखलुभुवनमहिताल्लोकपूजिताद्वंशतःकुलात्सञ्जातोऽपि पुनःअन्यैरितरैरनाप्यैरप्राप्यैः गुणमणीनांगुणरत्नानांगणैःपरिशोभितोऽपि हरिणाविष्णुनेन्द्रेणवासमबलोऽपि श्रीमांश्चापिसम्पद्युक्तोऽपिजनः विधौदैवेप्रतीपतरेअतिप्रतिकूलेसति प्रजल्पितुंकथयितुमक्षमामशक्याममितामसंख्यातांविपदमापदंप्राप्नोत्येव अत्ररविकुलजातस्यगुणरत्नाकरस्यमहाबलसम्पदोऽपिदैवप्रातिकूल्येनवनवासादिकष्टमनुभवतोरामस्यवृत्तेप्रस्तुतेतत्प्रत्यायनार्थंसामान्यमभिहितम् ॥ ९२ ॥

नत्कुटकवृत्तम्—विशेषनिबन्धनाप्रस्तुतप्रशंसा ।

रघुकुलसन्मणे परिगतस्तव दृष्टिपथं
सुमुख विभीषणो दशमुखोऽयमपीश तयोः ।
निशिचरपत्तनं सदनरत्नकनत्कुटकं
तदगमदेककः किल परस्तु विनाशितवान् ॥ ९३ ॥

विशेषनिबन्धनामप्रस्तुतप्रशंसांनत्कुटकवृत्तेनोदाहरति । रघ्विति । तल्लक्षणंतु "हयदशभिर्नजौभजजलागिति नत्कुटकमिति"। हेसुमुखशोभनवदनरघुकुलसन्मणेराम अयंविभीषणस्तवदृष्टिपथंदयादृष्टिसरणिंपरिगतः । अयंदशमुखोऽपितवक्रूरदृष्टिपथंपरिगतः प्राप्तः । तयोर्विभीषणदशमुखयोरेकएवैककः विभीषणः सदनेषुगृहेषुरत्नैर्वज्रमुक्तादिभिःकनन्तोदीप्यमानाः कुटाः कलशायस्मिंस्तथाभूतंनिशिचरपत्तनंलङ्काराज्यमगमत्प्राप्तवान् । अपरः अन्यः दशमुखस्तु तन्निशिचरपत्तनंविनाशितवान्किल । अत्र [रामसदृश] सत्पुरुषदयादृष्टिगोचरस्सम्पदमृच्छति तत्क्रूरदृष्टिगोचरोविपदमृच्छती-

तिसामान्येवक्तव्ये तत्प्रत्यायनार्थंअप्रस्तुतोविशेषोऽभिहितः ॥ ९३ ॥

कोकिलकवृत्तम्—कार्यनिबन्धनाप्रस्तुतप्रशंसा ।

जनकसुता प्रिया रघुपतेर्मम कोकिलक
क्व वदसि तां न चेच्छरगणैर्ननु हन्मि तदा ।
इति मयि कुप्यति ध्वनिमसौ किल पञ्चमगं
मधुरतरं ततस्सुपठितं परिकूजितवान् ॥ ९४ ॥

कार्यनिबन्धनामप्रस्तुतप्रशंसांकोकिलकवृत्तेनोदाहरति । जनकेति । तल्लक्षणंतु "मुनिगुहकार्णवैः कृतयतिं वद कोकिलकमिति" । नत्कुटकस्यैवयतिनियमेनकोकिलकमितिनामान्तरम् । सीतामन्वेषमाणस्यरामस्यलक्ष्मणंप्रत्युक्तिरियम् । ननुहेकोकिलकरस्यपरभृत रघुपतेः रामस्यममप्रियादयिताजनकसुतासीताक्वकुत्र तांनवदसिचेत्तदात्वां शराणांबाणानां गणैःहन्मि इतिमयिकुप्यतिसति असौकोकिलकः ततः जनकसुतायाः सुष्टुपठितंकिलाभ्यस्तमिवेत्युत्प्रेक्ष्यमाणं अतिशयेनमधुरंमधुरतरं पञ्चमगंपञ्चमस्वरगतंध्वनिशब्दं परिकूजितवान् शब्दितवान्। अत्राप्राकरणिकेनसीताकण्ठादभ्यस्तत्वेनोत्प्रेक्ष्यमाणेनकोकिलमधुरतरपञ्चमध्वनिरूपकार्येण प्राकरणिकस्यकारणभूतस्यसीताकण्ठध्वनेर्लोकोत्तरमाधुर्यविशेषः प्रतीयते ॥ ९४ ॥

हरिणप्लुतवृत्तम्—कार्यनिबन्धनाप्रस्तुतप्रशंसा ।

मेनके द्रुतमीक्ष्यतां प्रभुरुर्वशि क्षणमास्यतां
किंन्विदं हरिणप्लुतं सखि नूतनान्वरितुं वरान् ।
इत्थमीश रिपोः पुरे तव बन्धनात्त्रिदिवाङ्गना-
मोचिता रघुनायक स्फुटसंगता दधते मुदम् ॥ ९५ ॥



पुनरपिकार्यनिबन्धनामप्रस्तुतप्रशंसांहरिणप्लुतवृत्तेनोदाहरति । मेनकइति । तल्लक्षणंतु "रससजौहरिणप्लुतंजभराश्च नागपकीर्तितमिति" । हेसखिमेनकेद्रुतंशीघ्रंप्रभुरिन्द्रोरामोवात्वया ईक्ष्यतां दृश्यतां । सख्युर्वशित्वयाक्षणमास्यतांस्थीयतां नूतनान्नवान्वरान्रणहतान्वीरपुरुषवरान्वरितुंग्रहीतुं किन्विदं हरिणस्यमृगस्येवप्लुतंप्लवनं । इत्थमेवंजल्पन्त्यः हेईशप्रभोरघुनायकराम तवरिपोश्शत्रोरावणस्यपुरे बन्धनात्कारागृहबन्धान्मोचितारावणवधानन्तरंविभीषणेनविमोचिताःत्रिदिवाङ्गनाःपूर्वंरावणेनबन्दीबद्धाःअप्सरसः स्फुटंस्पष्टंसंगताःपरस्परंमिलितास्सत्यः मुदमानन्दंदधतेधरन्ति । अत्राप्रस्तुस्तेन देवाङ्गनानांबन्धनमोचनादिमोदविशिष्टतान्तकार्येण हेरामत्वयालोककण्टकोरावणस्संहृत इतिकारणस्यप्रतीतिः।

शार्दू⋯⋯तं—कारणनिबन्धनाप्रस्तुतप्रशंसा ।

किं मन्दोदरि तावकीनवदनाम्भोजं न्यमीलद्भृशं
राजत्यम्बुजबान्धवे सति कथं सत्कज्जलात्तावकात् ।
कालिन्दी नयनोत्पलद्वितयतो वेगेन निर्गच्छति
क्रुद्धस्सख्यभवज्जगत्त्रयविभु र्वैदेहजावल्लभः ॥ ९६ ॥

कारणनिबन्धनामप्रस्तुतप्रशंसांशार्दूलविक्रीडितवृत्तेनोदाहरति । किमिति । पतिमृतिदुःखितां मुखविकासरहितामश्रुविमुञ्चन्तींचरावणवनितामविदिततद्वृत्तान्ता काचनतत्सखीपृच्छति किमित्यादिनानिर्गच्छतीत्यन्तेन हेमन्दोदरि अम्बुजबान्धवेसूर्येभृशंसम्यक्विराजतिप्रकाशमानेसति तावकीनंत्वदीयंवदनंमुखमेवाम्भोजंपद्मंकिंकुतःन्यमीलत्संकुचितं कथंसत्विद्यमानंकज्जलमञ्जनंयस्मिन्तस्मात्तावकात्त्वदीयान्नयनेएवोत्पलेतयोर्द्वितयतोद्वन्द्वात् कालि-

न्दीयमुनावेगेननिर्गच्छतिनिस्सरतीति सख्यापृष्टामन्दोदरीप्रतिब्रूतेक्रुद्धइत्यादिना हेसखिजगत्त्रयस्यविभुःप्रभुःवैदेहजायाः सीतयावल्लभःपतिः क्रुद्धोऽभवत् । अत्रसख्यामन्दोदर्यामुखविकासाभावस्यसाञ्जननेत्रतः कालिन्दीजलवन्नीलरूपस्यस्रवतोऽश्रुणश्चनिमित्तेपृष्टेस्वप्रियमरणरूपनिमित्तंरामकोपकार्यमनाख्याय क्रुद्धस्सीतापतिरितितत्कारणमभिहितमितिकारणनिबन्धनाप्रस्तुतप्रशंसा ॥

निशावृत्तं —प्रस्तुतांकुरालंकारः ।

शलभपरिबृढं निशायां प्रदीपद्युतावाशया
जिगमिषुमवलोक्य मारीचनामाऽऽशरो वक्त्ययम् ।
शलभतिलक साहसं माकुरु स्वीकुरुष्वोदितं
मम बहुशलभास्तदाशावशान्मृत्युमेवाप्नुवन् ॥ ९७ ॥

प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुतांकुरः । यत्र प्रस्तुतेन वर्ण्यमानेनाभिमतमन्यत्प्रस्तुतं द्योत्यतेतत्र प्रस्तुतांकुरालंकारस्तं निशावृत्तेनोदाहरति । शलभेति । तल्लक्षणन्तु 'नगणयुगलतोऽब्धिरेफायदास्युर्निशासाभवेदि'ति । सीतापहरणेस्वंसहायंप्रार्थितवन्तंरावणमीषन्निद्रमालक्ष्यरात्रौमारीचश्शलभव्याजेनबोधयतितमित्थं । अयंमारीचनामा आशरोराक्षसोनिशायांप्रदीपद्युतौ दीपशिखायामाशायाभक्षणाशया जिगमिषुंतांप्रतिगन्तुमिच्छुंशलभपरिबृढंपतंगश्रेष्ठंअवलोक्यदृष्ट्वावक्तिब्रवीति किमिति-हेशलभतिलकपतंगपते साहदीपशिखाभक्षणायहठात्कारपूर्वकगमनकार्यं माकुरु ममोदितंवाक्यंस्वीकुरुष्वांगीकुरु बहवःशलभास्तस्यां दीपशिखायामाशावशान्मृत्युंमृतिमेवाप्नुवन् । अत्रशलभपरिबृढमेवंवक्तीतिवाच्यार्थस्यप्रस्तुतत्वं एवंचप्रस्तुतेनवाच्यार्थेनशलभहितोपदेशरूपेणदीप-



शिखासदृशसीताकामुकंरावणंप्रतिमारीचस्यहितोपदेशरूपंप्रधानभूतंप्रस्तुतान्तरमभिव्यज्यते ॥ ९८ ॥

करिणीवृत्तं—पर्यायोक्तालंकारः ।

न यदीयपदपि पश्यति सकलं नतु भुवनं
रघुपुंगव तमसा वृतनिलयामधिविपिनम् ।
भवदीयपदरुणांबुजरजसा धुतदुरितां
स शिलामपि करिणीगतिमकरोन्निजरमणीम् ॥ ९८ ॥

पर्यायोक्तंतुगम्यस्यवचोभंग्यन्तराश्रयम् । यदेवगम्यंविवक्षितंतस्यैवभंग्यन्तरेणविवक्षितरूपादपिचारुतरेणकेनचिद्रूपांतरेणाभिधानंपर्यायोक्तं [विवक्षितस्वप्रकारातिरिक्तेनचारुतरेणरूपेणव्यंग्यस्याभिधानंपर्यायोक्तं] करिणीवृत्तेनोदाहरति । नेति । तल्लक्षणन्तु 'सनजाअपिनभसाःशरयतिभिर्यदिकरिणीति । यस्य (गौतमस्य) अयंयदीयःपत्पादोपि सकलंसमस्तंभुवलंलोकं नतुपश्यतीतिन अपितुपश्यति गौतमस्याक्षपादत्वादितिभावः समुनिःअधिविपिनंवनेतमसाअन्धकारेण वृतनिलयांसंवृतास्पदांशिलामपिरघुपुंगवभवदीयस्यपदरुणांबुजस्यचरणकोकनदस्यरजसारेणुनाधुतदुरितांविगतकल्मषांकरिण्याःगतिसदृशगतिंनिजरमणींस्वभार्यामकरोत् । अत्रगौतमःस्वासाधारणरूपेणगम्यःसकलभुवनद्रष्टृपदत्वेनाभिहितः ॥

शार्दूलविक्रीडितवृत्तं—पर्यायोक्तभेदः ।

हे सीते परिधानमध्यपिहितं देह्यात्मनः कन्दुकं
क्रीडन्येन चिकीर्षुरसि विविधं शार्दूलविक्रीडितम् ।
किं याच्नावचसा स्वयं विचिनुयामित्यादरेण ब्रुवन्
नीवीस्रंसनकृत्स्त्रियाः सुरुचिरं दद्यात्सुखं राघवः ॥ ९९ ॥

पर्यायोक्तंतदप्याहुर्यद्व्याजेनेष्टसाधनम् । (रमणीयेनव्याजेनस्वस्यपरस्यवेष्टस्यसंपादनमपिपर्यायोक्तं) सूर्याश्वैर्मसजस्तताःसगुरवःशार्दूलविक्रीडितम् । तेनवृत्तेनतत्पर्यायोक्तमुदाहरति हेसीतइतिहेसीतेपरिधानस्याधोवस्त्रस्यमध्येपिहितंनिगूहितं आत्मनस्तवममवा कन्दुकंगेन्दुकंदेहि । येनकन्दुकेनक्रीडन्विहरन् विविधंनानाप्रकारं शार्दूलस्यव्याघ्रस्येवविक्रीडितंविशिष्टखेलनंचिकीर्षुः कर्तुमिच्छुरस्मि । अथवायाच्ञावचसाप्रार्थनोक्त्याकिं नकिमपिप्रयोजनमित्यर्थः । स्वयमहमेव पिहितंकन्दुकंविचिनुयांमार्गयेयमित्यादरेणप्रीत्याब्रुवन्कथयन् सुरुचिरंसविलासंयथातथा स्त्रियाः रमण्याः सीतायाः नीव्याअधोवस्त्रग्रन्थेः स्रंसनकृत्विस्रंसनंकुर्वन् राघवः सुखंदद्यात् दिशेत् । अत्रकन्दुकसद्भावशोधनाय नीवीविस्रंसनव्याजेन स्वेष्टसाधनं पर्यायोक्तम् ॥ ९९ ॥

पानीयस्थलरामणीयकयुते गोदास्रवन्तीतटे
क्रीडासाधनवस्तुभिः क्वचितं शय्यागृहं निर्मितम् ।
पश्य त्वं प्रियया समं रघुपते शार्दूलविक्रीडितं
कृत्वाऽऽनेतुमना वनान्तरमियां भोज्यं फलाद्युत्तमम् ॥

पुनरपिपर्यायोक्तंपूर्वोक्तवृत्तेनोदाहरति पानीयेति पानीयस्योदकस्यस्थलस्यदेशस्यच रामणीयकेनरमणीयतयायुतेयुक्ते गोदास्रवन्त्याः गोदावरीनद्यास्तटेतीरे क्रीडासाधनैर्विहारयोग्यैर्वस्तुभिः पदार्थैः क्वचितंव्याप्तं भवदाज्ञावशंवदेनमयानिर्मितंकृतंशय्यागृहंशयनसदनं हेरघुपते त्वंप्रिययादयितयासीतया समंसाकंपश्यवीक्षस्व । अहन्तुशार्दूलस्येवविक्रीडितंशीघ्रधावनादिखेलनं कृत्वाउत्तमंमेध्यंफलादिफलमूलकन्दपिशितादिकं भोज्यंअदनीयंवस्तुजातं आनेतुमाहर्तुं मनोयस्यतथाभूतः वनान्तरंवनमध्यंअन्यद्वनंवा इयांगच्छेयं अत्रसीतारामयोर्विहारानुगुणंशय्यागृहंनिर्माययभोज्यवस्त्वानयनव्याजेनबहिर्गच्छतालक्ष्मणेनतयोःस्वच्छन्दतासंपादनरूपंपरेष्टसाधनंपर्यायोक्तम् ॥ १०० ॥



वाणीवृत्तं—व्याजस्तुत्यलंकारः ।

हे रामाख्ये विपिनचरा मणिमयभूषादि हरामो
रम्या रामा नगरगता वशयितुमाभिर्विचरामः ।
इत्याद्युक्तीनघिमनुजान् श्रुतिमयवाणीनिव विज्ञान्
बुद्धेर्लेशो न भवति ते सुरवनभूमिं गमयन्त्याः ॥

उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः । निन्दयास्तुतेः स्तुत्याचनिन्दायाः स्तुत्यास्तुतेश्चोक्तिरभिव्यक्तिर्व्याजस्तुतिः । आद्यप्रकारद्वये स्तुतिनिन्दयोः समानविषयत्वभिन्नविषयत्वाभ्यांप्रत्येकंद्वैविध्यमिति चत्वारोभेदाः । अन्त्यस्तु भिन्नविषयस्तुतिक एकएवेति पञ्चभेदाः । व्याजस्तुतौनिन्दयास्तुतेस्समानविषयायाउदाहरणं वाणीवृत्तेनाह । हेरामेति । तल्लक्षणंतु मभसनयसगणा गुरुश्च नवसु यतिश्चेद्वाणीवृत्तम् । हे रामाख्येरामनामन् वयंविपिनचराः काननचारिणस्सन्तः वनप्रयाणिनांवणिजांमणिमयभूषादि रत्नखचिताभरणादिकं वस्तुजातं हरामः तान्प्रहृत्यतद्वस्त्वपहरामः । किंच नगरगताः पौरजनाइवरमणीयवेषास्सन्तः रम्यास्सुन्दरीः रामाः परवनिताः । वशयितुंमणिमन्त्रौषधादिभिस्स्वाधीनीकर्तुं आभिस्सहविचरामः सञ्चरामः इत्याद्युक्तीन्इतिएवमादयः उक्तयः ‘ नदीस्तरामोनभयंस्मरामोवनेचरामोवसुचाहरामः ’ इत्यादिवाक्यानि येषांतान् अघिनःपापिनोमनुजान्नरा-

नपि श्रुतिमयीवेदप्रचुरावाणीवाग्येषान्ते श्रुतिमयवाणयस्तान्श्रुतिमयवाणीन् । समासान्तविधेरनित्यत्वान्नकप् । गोस्त्रियोरितिह्रस्वः । विज्ञानिव तत्वज्ञानिव सुरवनभूमिंदेवलोकस्थितनन्दनादिप्रदेशं गमयन्त्याः आनुषङ्गिकरामनामकथनेनप्रापयन्त्याः ते हेरामाख्येभवत्याः बुद्धेर्धियः लेशःलवोऽपि नभवति । अत्रबुद्धिर्नास्तीतिनिन्दाव्याजेन रामनाम वेदवादिनइवपरस्वपरवनितापहारिपापिनोऽपिस्वर्गंनयतीतिव्याजनिन्दयारामनामप्रभावातिशयस्तुतिः ॥

राक्षसि त्वया क वा सुवृत्तया गिरौ कृतं महस्तपस्तु
यन्महापराक्रमं तमालकोमलच्छविं विना श्रमेण ।
राघवं पतिं विधाय तद्विहारकुङ्कुमैस्सुचर्चितेन
वक्त्रनासिकादिना प्रतीकतल्लजेन साम्प्रतं विभासि ॥

व्याजस्तुतौ स्तुत्या निन्दायास्समानविषयायाउदाहरणं "त्रिःरजौगणौअन्तेगुरुलघूचवृत्तनामवृत्तं" इति लक्षणवता वृत्तवृत्तेनाह । राक्षसीति । वृद्धामपिरामसौन्दर्यमुदीक्ष्यतद्भोगकाम्यया तरुणीरूपंधृत्वा रामसविधमुपेत्य स्वमनोरथमलब्ध्वापि प्रत्युत लक्ष्मणेन निकृत्तनासां सर्वतश्शोणितमेदुराङ्गीं स्वनिलयंगच्छन्तीं शूर्पणखामालोक्य तद्दौर्जन्यमसहमानायाः कस्याश्चिदुक्तिरियम् । हेराक्षसिशूर्पणखे सुवृत्तयासच्चरित्रयात्वया क्वा गिरौ सुमहत्तपस्तुकृतं यद्यस्मात्कारणान्महापराक्रमं तमालवत्तापिञ्छवत्कोमलच्छविंरम्यकान्तिराघवंरामंश्रमेणविनाअक्लेशेनपतिंविधाय तद्विहारेतेनसहक्रीडावसरे तद्विकीर्णैः कुंकुमपरागैस्सुचर्चितेनसुष्ठुविलिप्तेन मुखनासादिनाप्रतीकतल्लजेन श्रेष्ठावयवजातेन सांप्रतमधुना विभासिविराजसे । अत्रमहत्तपस्त्वयाकृतंतत्फलभूतंरामप्राप्त्यादि-



कमनुभूतमितिस्तुत्याअप्रार्थनीयपरपुरुषसङ्गमेच्छुंतद्दुरितफलभूतनासिकाकर्तनसर्वाङ्गरक्तमेदुरतायुक्तांवृद्धविधवाननुगुणकारिणींत्वांधिगितिनिन्दा निगीर्याध्यवसानद्वारागम्यते ॥ १०२ ॥

हेमाद्रौ वा हिमाद्रौ रजतशिखरिणि क्ष्माधरे मन्दरे वा
कुत्रायं चञ्चरीकश्शुकशकुनिरयं चापि कालं कियन्तम् ।
तप्त्वा वैदेहि लीढे कमलमधु भवद्वक्त्रपीयूषतुल्यं
बिम्बं दन्दंष्टि दन्तच्छदसदृशमिदं माधवीस्रग्धरे ते ॥

व्याजस्तुतौस्तुत्यास्तुतेर्भिन्नविषयायाउदाहरणम् "म्रभ्नैर्यानान्त्रयेणत्रिमुनियतियुतास्रग्धराकीर्तितेयम्" इतिलक्षणवतास्रग्धरावृत्तेनाह । हेमेति । उद्यानेसीतयासहविहरतोरामस्योक्तिरियम् । माधवीस्रग्धरेवासन्तीपुष्पमालाधारिणिहेवैदेहिजानकि हेमाद्रौमेरौवा हिमाद्रौहिमवद्गिरौवा रजतशिखरिणिकैलासेवा मन्दरेतदाख्येक्ष्माधरेगिरौवा अन्यत्रकुत्रवा कियन्तंकालंतप्त्वातपः कृत्वा अयंचञ्चरीकः दीर्घिकाविहारीमधुकरः भवत्यास्तववक्त्रपीयूषस्यमुखामृतस्यतुल्यंसदृशंकमलमधुपद्ममकरन्दंलीढेपिबति । अपिचतथैवायंशुकशकुनिःवनविहारीकीरपक्षीच हेमाद्रौ...... तपःकृत्वा तेतवदन्तच्छदसदृशंअधरतुल्यंइदंबिम्बंबिम्बफलं दन्दंष्टिपुनःपुनर्दशति । अत्रमधुकरस्तुत्यासीतावदनामृतसौभाग्यातिशयस्तुतिः । शुकस्तुत्यासीताऽधरसौभाग्यातिशयस्तुतिश्चव्यज्यते । व्याजस्तुतौनिन्दयास्तुतेर्भिन्नविषयायाउदाहरणंस्तुत्यानिन्दायाभिन्नविषयायाउदाहरणंच "कस्त्वंवानर...... नज्ञायते । यद्वक्त्रंमुहुरीक्षसे ...... तपः" इत्यादिकंज्ञेयम् ॥ १०३ ॥

### शम्भुनटनवृत्तम्—व्याजनिन्दा ।

अये सखि सएव बहु निन्दनपदं रघुपतिः कुशिकसम्भवमखे
सुबाहुमिव यः कनककायकमलं न हतवान्कलितशम्भुनटनः ।
खरास्रपमुखं पललभोजिनिकरं भृशदुरापनरकामयुतया
निदर्शितनिजाश्रमभुवा रणगतं न च जघान सह शूर्पणखया ॥

निन्दायानिन्दयाव्यक्तिर्व्याजनिन्देतिगीयते । अन्यनिन्दयाअन्यस्यनिन्दायाअभिव्यक्तिर्व्याजनिन्दा, तां "जसनभजसनभगणाः लघुगुरूएतैर्यस्यपादःषड्विंशत्यक्षरोभवतितच्छम्भुनटनवृत्तं अत्रचतुर्दशेषड्विंशेचवर्णेयतिः" इतिलक्षणवताशम्भुनटनवृत्तेनोदाहरति । अयेसखीति शूर्पणखासन्धुक्षणेनमायामृगमारीचसाहायकमाश्रित्यसीतामपहृत्यसर्वंविनाश्यमृतंदशाननंपरिदेवयन्त्यास्तत्पत्न्यास्सखीमवलोक्येयमुक्तिः । अयेहेसखि सरघुपतिःरामएव बहूनांविविधानांनिन्दनानांनिन्दावचनानांपदंविषयः बहुधानिन्द्यइत्यर्थः यःरघुपतिःकुशिकसम्भवस्यविश्वामित्रस्यमखेयज्ञेमखसम्भूतेयुद्धे कलितंकृतंशम्भोरिवनटनं (लक्षणया) व्यायामोयेनतथाविधस्सन् । सुबाहुंतदाख्यराक्षसमिव कनककायंस्वर्णमयशरीरंकमलंमृगंमारीचंनहतवान्नावधीत् चकिंचयःरणगतंयुद्धभूमिमागतं खरः तदाख्यः अस्रपः राक्षसः मुखंप्रमुखोयस्यतथाभूतं पललभोजिनांपलाशानां निकरंसङ्घंभृशंदुरापेदुर्लभेनरेपुरुषेरामेकामयुतया सकामयानिदर्शिताप्रदर्शितानिजाश्रमभूःरामाश्रमभूमिर्ययातथाभूतयाशूर्पणखयासहनजघाननहतवान् किंतुतांविहायतन्निकरमेवहतवानित्यर्थः सएवबहुनिन्दनपदमितिपूर्वेणसंबन्धः । अत्ररामनिन्दयालङ्कानाशकारणस्यमारीचस्यशूर्पणखायाश्चनिन्दाऽभिव्यज्यते ॥



### द्रुतमध्यावृत्तम्—आक्षेपालङ्कारः ।

किञ्चिदुदञ्चय पञ्चमगीतिं परभृत कर्णमधु द्रुतमध्याम् ।
अस्त्यथवा ननु मे दयिताया जनकभुवः कलकण्ठनिनादः ॥

आक्षेपस्स्वयमुक्तस्यप्रतिषेधोविचारणात् । स्वयमुक्तस्यार्थस्यकिञ्चिन्निमित्तमभिसन्धायप्रतिषेधआक्षेपः । तं "भत्रयमोजगतंगुरुणीचेत्युजिचनजौज्ययुतौद्रुतमध्या" इतिलक्षणवताद्रुतमध्यावृत्तेनोदाहरति किञ्चिदिति । हेपरभृतकोकिल कर्णयोर्मधुवन्मरन्दवदानन्दकरंद्रुतंगीतिगतशीघ्रगतिःमध्यंविलम्बितद्रुतगत्योर्मध्यगतिश्चयस्यास्तथाभूतां पञ्चमगीतिंपञ्चमस्वरं किञ्चिदीषदुदञ्चयोच्चारय । अथवा ननुहेपरभृत मेरामस्यममदयितायाः प्रियायाः जनकभुवः जानक्याः कलः मधुरः कण्ठनिनादः कण्ठस्वरोऽस्ति । अत्रप्रार्थितस्यपरभृतपञ्चमस्वरोच्चारणस्यसीताकण्ठस्वरसत्वेनानर्थक्यंविचार्याथवेत्यादिसूचितः प्रतिषेधआक्षेपः ॥ १०५ ॥

### उपचित्रवृत्तम्—आक्षेपभेदः ।

श्रृणु मे वचनं विरूपचित्रं राघव मारुतिरस्मि न दूतः ।
हरिणीव शिखावृताऽस्ति राक्षस्यालिवृता जनकस्य तनूजा ॥

निषेधाभासमाक्षेपंबुधाः केचनमन्वते । ननिषेधमात्रमाक्षेपः किन्तु योनिषेधोबाधितस्सन्नर्थान्तरपर्यवसितःकिञ्चिद्व्यङ्ग्यार्थविशेषमाक्षिपतिसआक्षेपः । तमाक्षेपं "विषमेयदिसौपुनर्जगौगो भौयुजिभाद्गुरुकावुपचित्रम्" इतिलक्षणवतोपचित्रवृत्तेनोदाहरति । श्रृण्विति । हेराघव विरूपंजगदेकवीरस्यतवपुरतोनिवेदयितुमननुगुणं अतएवचित्रमद्भुतंमेममवचनंश्रृणु मारुतिःहनुमान्नामाऽहं तवदूतः दूत्यकर्मप्रवृत्तोनास्मि । शिखयादावाग्निज्वालयावृतासं-

वृताहरिणीमृगीव जनकस्यतनूजाजानकी राक्षस्यालिवृता अशोकवनेराक्षसीनांमांसादिनीनामाल्यासङ्घेनपरिवृताऽस्ति। अत्रसीतासन्देशमखिलमुक्तवतोदूतस्यहनुमतउक्तौ नदूतोऽस्मीतिनिषेधोबाधितत्वादाभासरूपःराघववीर्यसन्धुक्षणसमयोचितमिथ्यावचनपरिहारेणयथार्थवादित्वेपर्यवस्यन् कालहरणमुत्सृज्येदानीमेवलंकांगत्वानिहत्यशत्रून्सीतासमुज्जीवनीयेतिव्यङ्ग्यार्थविशेषमाक्षिपति॥

वेगवतीवृत्तं—आक्षेपभेदः।

अवलम्ब्य पते पितुराज्ञां गच्छसि वेगवतीं यदि गच्छेः।
दयितामिह मां विसृजन्नो चिरतापकरं तव यानम्॥

आक्षेपोऽन्योविधौव्यक्तेनिषेधेचतिरोहिते। तमाक्षेपं "सयुगात्सगुरूविषमेचेद्भाविहवेगवतीयुजिभाद्गौ" इतिलक्षणवतावेगवतीवृत्तेनोदाहरति। अवेति। आत्मनोवनयात्रांप्रतिषेधन्तंराघवंप्रतिसीतोक्तिरियम् हेपतेत्वंवेगवतींशीघ्रंवनंगन्तव्यमित्येवंरूपां पितुराज्ञामवलम्ब्यगृहीत्वादयितांप्रियांमामिहविसृजन्त्यजन्सन्गच्छसियदिवनंयासिचेद्गच्छेःयायाः तवयानंयात्रामेममचिरतापकरंनो चिरकालंसन्तापकारिनभवेत्। अत्रगच्छेरितिविधिर्व्यक्तःमागाइतिनिषेधस्तिरोहितः। नोचिरतापकरमितिस्वमरणसंसूचनेनगमननिषेधोगर्भीकृतः॥ १०७॥

विरोधाभासः।

पित्राज्ञां निर्वोढुं क्षमोऽपि वहसि त्वमक्षमताम्।
ईशोऽप्यनीश एव श्रीरघुपुङ्गव महादरोऽप्यदरः॥

विरोधस्याभासत्वेआपाततोभासमानत्वेविरोधाभासस्तमार्योदाहरति पित्रिति। हेश्रीरघुपुङ्गवत्वंपितुराज्ञांवनगमनाज्ञां निर्वोढुं



कर्तुंक्षमःशक्तोऽपि अक्षमतांअशक्तत्वंराज्यराहित्यंचवहसिप्राप्नोषि ईशःप्रभुरप्यनीशःअप्रभुः नविद्यतेईशःयस्यसइत्यपि महान्दरःभयंयस्यसःमहादरोऽपि अदरोभयरहितः। महानादरःभक्तेषुप्रीतिर्यस्यसइत्यपि। अत्रसमन्वयस्स्पष्टः॥ १०८॥

गच्छेति वनं विभो क्षमस्त्वं पित्राज्ञामपि वोढुमक्षमोऽसि।
सर्वस्य विराट्च नो विराट्त्वं निर्भीकोऽपि महादरोऽसि लोके॥

विषमे तजरगणागुरुश्च समे मसजगणागुरुद्वयंचेद्विराडिति लक्षणवताविराड्वृत्तेन विरोधाभासमुदाहरति। गच्छेति। पित्राज्ञांवोढुं क्षमःशक्तोप्यक्षमःअशक्तःराज्यरहितश्चासि। सर्वस्यजगतोविराट्चविशिष्टोराट्चराजापित्वं विराट्विशिष्टोराजा नो नासिविराट्वीनांपक्षिणांराट्राजागरुडोनासीत्यपि। लोकेनिर्भीकोभयरहितोपिमहान्दरोभयंयस्यसःमहादरोसि महान्आदरोयस्यसइत्यपि। अत्रापिसमन्वयस्स्पष्टः॥ १०९॥

वियोगिनीवृत्तं—विभावनालंकारः।

जनकस्य सुतां वियोगिनीं त्रिजटा प्राह भवत्पदौ सखि।
न हि यावकलेशचर्चितावयि वर्वर्ति तथापि पाटलः॥

विभावना विनापि स्यात्कारणं कार्यजन्म चेत्। प्रसिद्धकारणाभावेपि कार्योत्पत्तिर्विभावना। तां "विषमेससजागुरुस्समे सभरालोऽथगुरुर्वियोगिनी"ति लक्षणवता वियोगिनीवृत्तेनोदाहरति जनकस्येति त्रिजटातदाख्याकाचनराक्षसीसीतासखी वियोगिनींरामविरहितांजनकस्यसुतामेवंप्राह। किमितिअयिहेसखिभवत्याःपदौ यावकस्यलाक्षारसस्यलेशेनलवेनापिचर्चितौसिक्तौनहि नस्तः तथापिपाटलःरक्तःवर्वर्तिभृशंवर्तते। अत्रयावकरसचर्चनरूपकारणाभा-

वेपिपाटलिमाकथितः स्वाभाविकत्वेनविरोधपरिहारः ॥ ११० ॥

आख्यानिकावृत्तं—विभावनाभेदः ।

आख्यानिकायामिदमद्भुतं ते निगद्यते राघव यं त्वमास्यः ।
विद्राव्य काकं त्रिजगत्स्वतीक्ष्णो मृदुस्स दर्भोऽस्य जहार नेत्रम् ॥

हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा (विभावना) मता । इतिविभावनाभेदं "प्रथमतृतीयपादाविन्द्रवज्रायाः द्वितीयचतुर्थावुपेन्द्रवज्रायायदिस्यातांतदाख्यानिकावृत्तं" इति लक्षणवतातेनवृत्तेनोदाहरति आख्यानिकायामिति हेराघवतेतवाख्यानिकायामितिहासेरामायणेइदमद्भुतमाश्चर्यंनिगद्यतेकथ्यते । किमिति त्वंयंदर्भंआस्यः काकासुरोपर्यक्षिपः सःअतीक्ष्णस्तैक्ष्ण्यरहितःमृदुःकोमलोदर्भस्त्रिषुजगत्सुतंकाकंविद्राव्यविद्रुतंकृत्वा अस्यकाकस्यनेत्रंदक्षिणाक्षिजहारअहरत् । अत्रकाकनेत्रापहरणेसाध्येहेतोर्दर्भस्यासमग्रत्वंतीक्ष्णत्वादिगुणवैकल्यम् । ॥ १११ ॥

विपरीताख्यानिकावृत्तं—विभावनाभेदः ।

रघूत्तमोक्ता मुनिना न मिथ्या नाख्यानिका ते विपरीतपूर्वा ।
तथापि मुक्तिं दिशति त्वयीमे बद्धास्सकामा न सितास्त्वकामाः ॥

कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके । इतिविभावनाभेदं "प्रथमतृतीयपादावुपेन्द्रवज्रायाः द्वितीयचतुर्थपादाविन्द्रवज्रायायदिस्यातांतद्विपरीताख्यानिकावृत्तमिति" लक्षणवतातेनवृत्तेनोदाहरतिरघ्विति हेरघूत्तममुनिनावाल्मीकिव्यासप्रभृतिनोक्तातेतवाख्यानिका रामभक्तःसंसृतिबन्धान्मुच्यतेतदभक्तःसंसृतिबन्धवान्भवतीतिसुहृदिवव्यंग्यमर्यादयाप्रवक्तारामायणादीतिहासः मिथ्यान सत्यैव तथा विपरीतपूर्वा पूर्वशब्दउपलक्षणविधयोत्तरस्यापिबोधकःविरुद्धपूर्वोत्तरभागापिन त्वदाख्यानकथितंसत्यमविरुद्धपूर्वोत्तरमित्यर्थः । तथापिमुक्तिभक्तानांमोक्षंदिशतिवितरतित्वयिसकामास्सभक्तयःइमे बद्धाःसंसृतिबन्धवन्तोभवन्ति । अकामाः भक्तिरहितास्तु सितास्संसृतिबद्धा न नभवन्ति । त्वयिमुक्तिदिशतिसति सकामाः त्वामनासेव्यकामक्रोधादियुक्ताःबद्धाभवन्ति । अकामाःकामक्रोधादिराहित्येनत्वामासेवमानाःसिताःबद्धानभवन्तीतिविरोधपरिहारः । अत्रसकामाःभक्ताःसंसृतिबन्धप्रतिबन्धकभक्तिशालिनःश्लेषेणगृहीताः । अकामाअभक्ताःसंसृतिबन्धाभावप्रतिबन्धकभक्त्यभाववन्तश्चश्लेषेणगृहीताइति सत्येवप्रतिबन्धकेकार्योत्पत्तिः ॥ ११२ ॥



उपजातिभेदः—विभावनाभेदः ।

सीताकुचौ वीक्ष्य पतिः स्थिरायाः जाता तटित्तोऽद्रियुगीति चष्टे ।
पत्युर्मुखं वक्ति विलोक्य नीलाचलादुदीतश्च शशीति सीता ॥

अकारणात्कार्यजन्मचतुर्थीस्याद्विभावना । इतिविभावनाभेदमुपजातिभेदेनोदाहरति सीतेति पतिःरामःसीताकुचौवीक्ष्यचष्टे । किमिति स्थिरायाश्चंचलतांविहायस्थिरभावंगतायास्तटित्तोविद्युतः अद्रियुगीशैलद्वयीजातेति । सीताचपत्युर्मुखंविलोक्यवक्ति किमिति नीलाचलादिन्द्रनीलपर्वतात्शशीचन्द्रःउदीतःजातइति । अत्रतटित्त्वेनसीताशैलयुगत्वेनतत्कुचद्वयंचाध्यवसीयते । तथानीलाचलत्वेनरामःचन्द्रत्वेनतन्मुखंचाध्यवसीयतइत्यकारणात्कार्यजन्म ॥

विलोक्य रामश्शशिनं ब्रवीति तरोस्तलं याम्ययि लक्ष्मणैते ।
कराः शशांकस्य मदीयकायं सन्तापयन्त्यर्ककरोपमानाः ॥

विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावना । इतिविभावनाभेदमुपजातिभेदेनोदाहरति विलोक्येति सीताविरहवेदनामनुभवन् रामःशशिनमुदितंचन्द्रंविलोक्यब्रवीति किमिति अयिहेलक्ष्मणतरोस्तलंयामि अर्ककरोपमानाःरविकिरणसदृशाःएतेशशांकस्यकराः किरणाः मदीयंकायंशरीरंसंतापयन्ति । अत्रतापनिवर्तकतयातापविरुद्धैःशशिकिरणैस्तापजनिरुक्ता ॥ ११४ ॥

तवाननेन्दोः सितदुग्धराशि रुदेति वैदेहि पते पुरस्तात् ।
जातस्त्वदीयात्करकल्पवृक्षात् कीर्तिच्छटाक्षीरनिधिप्रवाहः ॥

कार्यात्कारणजन्मापि दृष्टा काचिद्विभावना । तामुपजातिभेदेनोदाहरति तवेति सीतारामयोर्नर्मोक्तिरियं हेवैदेहितवाननेन्दोर्मुखचन्द्रात् स्मितंहासएवदुग्धराशिःक्षीरसमुद्रःउदेत्याविर्भवति । स्मितस्यमन्दत्वात्तत्सादृश्यानुगुण्यायदुग्धराशेः किंचिदुदञ्चनंवार्तमानकालिकमालोच्यसीताप्राह पतेरामत्वदीयात् करएवदातृत्वात्कल्पवृक्षस्तस्मात्कीर्तिच्छटायशोराशिरेवक्षीरनिधिस्तस्यप्रवाहः पुरस्तात्पूर्वमेवजातः । अत्रक्षीरांबुधिजन्यादिन्दोःकल्पवृक्षाच्चकारणस्यक्षीरांबुधेरुत्पत्तिरुक्ता ॥ ११५ ॥

उपजातिभेदः—विशेषोक्तिःअलंकारः ।

क्लिष्टोऽपि रक्षोविषकण्डकैरप्याशागुणो मैथिलपुत्रिकायाः ।
न च्छिद्यते राघव लंबमानत्वदीयविश्लेषरुजाधरोऽपि ॥

कार्याजनिर्विशेषोक्तिः सतिपुष्कलकारणे । तामुपजातिभेदेनोदाहरति क्लिष्टइति हनुमदुक्तिरियं हेराघवमैथिलपुत्रिकायाःअशोकवनान्तरेराक्षसीवृतायाःसीतायाः आशागुणःस्नेहसूत्रं रक्षोभिरेवविषकण्टकैःक्लिष्टोपि लंबमानः त्वदीयःविश्लेषोवियोगस्तेनजातारुजारोगएवधरःपर्वतोयस्मिंस्तथाभूतोपि नच्छिद्यतेछिन्नोनभवति । अत्रसूत्रविच्छेदकारणपौष्कल्येपिविच्छेदरूपकार्यानुत्पत्तिरुक्ता ॥



उपजातिभेदः—असंभवालंकारः ।

को वेद सप्तैष शरेण सालानेकेन भिन्द्याद्दश योजनानि ।
क्षिपेत्पदो दुन्दुभिदानवस्य शरीरमंगुष्ठमुखेन चेति ॥

कस्यचित्पदार्थस्यनिष्पत्तेरसंभावनीयत्ववर्णनमसंभवालंकारस्तमुदाहरति कइति सप्तसालभेदनदुन्दुभिशरीरक्षेपणकृतंराघवंश्लाघमानस्यसुग्रीवस्योक्तिरियं एषराघवएकेनशरेणसप्तसालान्सालवृक्षान्भिन्द्यात् किंचदुन्दुभिदानवस्यशरीरं पदःपादस्यांगुष्ठस्यमुखेनाग्रेणे दशयोजनानिक्षिपेदस्येदितिकोवेदवेत्ति नकोपीत्यर्थः अत्रसमन्वयः स्पष्टः ॥ ११७ ॥

उपजातिभेदः—असंगत्यलंकारः ।

रघूत्तमेनाहवकर्म सम्यगनुष्ठितं श्रेष्ठतमं वनान्ते ।
प्राप्तं फलं स्वर्गसुखं समस्तै रक्षोभिरुग्रैः खरदूषणाद्यैः ॥

ययोःकार्यहेत्वोर्भिन्नदेशत्वंविरुद्धंतयोस्तन्निबध्यमानमसंगत्यलंकारस्तमुदाहरति रघ्विति आहवकर्मयज्ञकर्मयुद्धकर्मच स्वर्गसुखंयज्ञकर्मशूरप्राप्यंयुद्धांगणहतवीरप्राप्यंच शिष्टंस्पष्टं । अत्रयज्ञकर्मस्वर्गफलयोर्भिन्नदेशत्वंनिबद्धम् ॥ ११८ ॥

उपजातिभेदः—असंगतिभेदः ।

धार्यं किरीटं भरतः स्वमूर्ध्नो रघूत्तमस्यांघ्रियुगे न्यधत्त ।
स्वपादुके पादयुगेन धार्ये व्यधत्त रामो भरतस्य मूर्ध्नि ॥

अन्यत्रकरणीयस्यततोन्यत्रकृतिश्चसा (असंगतिः) तामुदाहरति धार्यमिति भरतोमातृवरेणस्वमूर्ध्नाधार्यंकिरीटंरामस्यांघ्रियुगेन्य-

धत्तनिहितवान् । रामोपिपादयुगेनधार्येस्वपादुकेभरतस्यमूर्ध्निव्यध-त्तविहितवान् । अत्रशिरसिरसिकरणीयंपादयोःकृतंपादयोःकरणी-यंचशिरसिकृतमित्यसंगतिः ॥ ११९ ॥

उपजातिभेदः—असंगतिभेदः ।

रघूत्तमो गाधितनूभवस्य यज्ञे सुमित्रातनयेन साकम् ।
पलाशिनः पालयितुं प्रवृत्तः पलाशिनां दण्डनमेव चक्रे ॥

अन्यत्कर्तुंप्रवृत्तस्यतद्विरुद्धकृतिस्तथा (असंगतिः) तामुदाहरति रघ्विति रघूत्तमोरामःगाधितनूभवस्यविश्वामित्रस्ययज्ञे सुमित्रातनयेनलक्ष्मणेनसाकंसह पलाशिनःपलाशसमिदादिहरान्पलाशदण्डधरान्वारक्षोभीतान्विश्वामित्रशिष्यान् पालयितुंरक्षितुंप्रवृत्तस्सन् पलाशिनांपलाशदण्डधराणांविश्वामित्रशिष्याणांमांसाशिनांराक्षसानांच दण्डनंशिक्षणमेवचक्रे । अत्रपलाशिनांरक्षणप्रवृत्तेनतद्विरुद्धंपलाशिनांदण्डनंकृतमितिश्लेषोत्थापितेयमसंगतिः ॥

उपजातिभेदः विषमालंकारः ।

स्नुहिद्रुवत्तीव्रविहिंसकस्त्वं मल्लीव रम्या मृदुला च सीता ।
एनां वहन्न त्रपसे दशास्य क्व मल्लिका क्व स्नुहिकण्टकद्रुः ॥

विषमंवर्ण्यते यत्र घटनाननुरूपयोः । परस्परमानुरूप्यरहितयोः पदार्थयोर्यत्रघटनासंबन्धस्संयोगादिरुत्पाद्योत्पादकभावश्चवर्ण्यतेतत्रविषमालंकारस्तमुदाहरति स्नुहीति सीतामपहृत्यगच्छन्तंरावणमालोक्यजटायुषउक्तिरियं । हेदशास्यरावण त्वंस्नुहिद्रुवत्कण्टकवृक्षभेदवत्तीव्रः कण्टकैस्तीक्ष्णैरुग्रः अतएवविशेषतोहिंसकश्च । सीतातु मल्लीलतेवरम्यासुन्दरीमृदुलामृद्वंगीच अतःएनांसीतांवहन्नयन्त्वंनत्रपसेलज्जावान्नभवसि । परस्परानुरूपत्वमाह



क्वेति मल्लिकासदृशीसीताक्व । स्नुहिकण्टकद्रुःस्नुहिनामककण्टकवृक्षसदृशोभवांश्चक्व । अत्ररम्यत्वमृदुत्वादिनातीव्रत्वहिंसकत्वादिनाचाननुरूपयोस्सीतारावणयोर्घटनाकृता ॥ १२१ ॥

उपजातिभेदः—विषमालंकारभेदः ।

पुष्पायुधारातिशिरोधरेव कलिन्दकन्याजलवेणिकेव ।
नीला रघूत्तंस भुजालता ते कीर्तिं प्रसूते शरदिन्दुशुभ्राम् ॥

विरूपकार्यस्योत्पत्तिरपरंविषमंमतम् । कार्यकारणयोर्निवर्त्यनिवर्तकत्वेपञ्चमीविभावना विलक्षणगुणशालित्वेत्वयंविषमइतिभेदः । [विरूपकार्यस्यकारणविलक्षणस्वरूपस्येत्यर्थः] तंविषमभेदमुदाहरति पुष्पेति हेरघूत्तंसराम पुष्पायुधारातेश्शिवस्यशिरोधरेवकण्ठवत् कलिन्दकन्यायायमुनायाः जलवेणिकेवकचसदृशजलप्रवाहवच्चनीलाश्यामातेतवभुजालतालतासदृशभुजः शरदिन्दुवत्शुभ्रांधवलांकीर्तिंप्रसूतेजनयति । अत्रकारणगुणपरिपाट्या [स्वसजातीयकार्यगुणोत्पादकत्वरूपया] विरुद्धान्नीलाद्धवलोत्पत्तिः ॥

उपजातिभेदः—विषमालंकारभेदः ।

रतीच्छया सुन्दरसुन्दरांगं रामानुजं शूर्पणखा समेत्य ।
अप्राप्य तत्संगसुखं बभूव तस्यासिना प्रत्युत कृत्तनासा ॥

अनिष्टस्याप्यवाप्तिश्चतदिष्टार्थसमुद्यमात् । इष्टार्थमुद्दिश्यकिंचित्कर्मारब्धवतोनकेवलमिष्टस्यानवाप्तिः किन्तुततोनिष्टस्यापिप्रतिलंभश्चेत्तदपिविषमं तदुदाहरति रतीति शूर्पणखारतीच्छयालक्ष्मणेनसहरतिमनुभवितुमाशयासुन्दराणामपिसुन्दराण्यंगानियस्यतं रामस्यानुजंलक्ष्मणंसमेत्योपेत्य तेनसहसंगस्संगमस्तेनजातंसुखमप्राप्य प्रत्युतकिन्तु तस्यलक्ष्मणस्यासिनाखड्गेनकृत्तनासा

छिन्ननासिकाबभूव। अत्ररत्याशयालक्ष्मणमुपगतायाश्शूर्पणखायाः-नकेवलंरत्यलाभःकिन्तुनासिकाच्छेदोपि ॥ १२३ ॥

उपजातिभेदः—समालंकारः ।

मल्लीलता मैथिलराजकन्या चूतद्रुमः पङ्क्तिरथस्य पुत्रः ।
तयोस्तु संगः प्रियकृन्न कस्य मल्लीरसालद्रुमसंगतुल्यः ॥

समंस्याद्वर्णनंयत्र द्वयोरप्यनुरूपयोः । प्रथमविषमप्रतिद्वंद्वीदं-समं तदुदाहरति मल्लीति मैथिलराजकन्यासीता मल्लीलतामल्लील-तासदृशी पङ्क्तिरथस्यदशरथस्यपुत्रोरामस्तुचूतद्रुमःरसालवृक्ष-सदृशः मल्ल्याःरसालद्रुमस्यचसंगेनसंबन्धेनतुल्यस्सदृशास्तयो-स्सीतारामयोस्संगः कस्यप्रियकृन्नभवेत् सर्वस्यापिप्रियकृदितिभा वः समन्वयःस्पष्टः ॥ १२४ ॥

उपजातिभेदः—समालंकारभेदः ।

योगीश्वरोऽसौ जनकाधिराजः पिता क्षमेयं जननी भवत्याः ।
अतो दशास्यस्य च राक्षसीनां सर्वं कुकृत्यं सहसे सखि त्वम् ॥

सारूप्यमपिकार्यस्यकारणेनसमंविदुः । इदंद्वितीयविषमप्रति-द्वंद्विसमं तदुदाहरति योगीति रावणराक्षसीतर्जनादिकंसहमानां सीतामासाद्यतत्सख्यात्रिजटायाउक्तिरियं । अयिसखिसीतेभवत्या-स्तव योगिनांशमदमादिमतामीश्वरःअसौप्रसिद्धःजनकाधिराजः जनकराजःपिता इयंक्षमासर्वंसहाजननीमाता अतःकारणात्सर्वं द-शास्यस्यरावणस्यकुकृत्यंअपहरणादिकुत्सितकार्यं राक्षसीनां कु-कृत्यंभर्त्सनादिकुचरितंच त्वंसहसेक्षमसे । अत्रकार्यभूतायास्सीता-याः कारणभूतशमदमादिमज्जनकस्वभावानुरूप्यं कारणभूतसर्व-सहनादिमज्जननीस्वभावानुरूप्यंचदर्शितम् ॥ १२५ ॥



उपजातिभेदः—समालंकारभेदः ।

उच्चेषु कूटेष्वटनं रताय सौमित्रिणा शूर्पणखाऽर्थयन्ती ।
उपेत्य तं प्राप जवेन तस्मा दुच्चाटनं न ह्यफला सदर्चा ॥

विनानिष्टंचतत्सिद्धिर्यदर्थंकर्तुमुद्यमः । अनिष्टंविना यमर्थंकर्तु-मुद्यमस्तत्सिद्धिरपिसमं इदंतृतीयविषमप्रतिद्वंद्वि तदुदाहरति उच्चे-ष्विति सौमित्रिणालक्ष्मणेनसह रतायक्रीडामनुभवितुं उच्चेषुउन्न-तेषुश्रेष्ठेषुवाकूटेषुगिरिशृंगेषुअटनंतेनसहसंचारमर्थयन्तीप्रार्थयमा-नाशूर्पणखा तंलक्ष्मणमुपेत्यजवेनशीघ्रंतस्माल्लक्ष्मणादुच्चाटनमुच्चे-षुस्थानेष्वटनंदूरनिर्वासनंचप्राप हियतःसदर्चामहत्सेवाअफलानि-ष्फलानभवति । अत्रोच्चाटनार्थितयालक्ष्मणमुपसर्पन्त्याःशूर्पण-खायाःअन्ततस्समुपसर्पणेनासिकाच्छेदरूपोत्कटानिष्टप्राप्तावपि प्र-थमद्वितीयसमुपसर्पणयोस्तादृशानिष्टाभावादिदंतृतीयसमोदाहर-णं इष्टावाप्तिस्तुश्लेषकल्पिताबोध्या ॥ १२६ ॥

आख्यानिकावृत्तं—विचित्रालंकारः ।

निश्चिन्तितस्संभवितुं सदोघः सचिन्तितो राम भवत्यजस्रम् ।
औन्नत्यमभ्याप्तुमना जगत्सु नतिं करोत्येतदतीव चित्रम् ॥

विचित्रंतत्प्रयत्नश्चेद्विपरीतः फलेच्छया । फलेच्छयाविपरीतः प्रयत्नोविचित्रालकारस्तमाख्यानिकावृत्तेनोदाहरति निरिति हेराम-सतांसज्जनानामोघस्समूहः निश्चिन्तितःविषयादिचिन्तारहितःसंभ-वितुंसम्यग्भवितुमजस्रंसदा सचिन्तितःविषयादिचिन्तासहितः भ-वति । हेरामभवतित्वयिसचिन्तितःसभक्तिरस्तीतिविरोधपरिहा-रः । अपिकिंचजगत्सुलोकेषु औन्नत्यमुच्चताभाप्तुं प्राप्तुंमनोयस्यत-थाभूतस्सन्सदोघःनतिंकरोतिनम्रीभवति एतदतीवचित्रमद्भुतं उ-

त्कर्षप्राप्तुंविनयादिगुणयुक्तोभवतीतिवा त्वयिप्रणामादिसेवांकरोती
तिवाविरोधपरिहारः ॥ १२७ ॥

उपजातिभेदः—अधिकालंकारः ।

कार्यप्रपञ्चं प्रकृतिर्विलाप्य यत्रास्ति रामस्य तनौ युगान्ते ।
ममौ न तस्यां दयितेक्षितेति हनूमदावेदनजः प्रमोदः ॥

अधिकंपृथुलाधारादाधेयाधिक्यवर्णनम् । तदुदाहरति कार्ये-
ति युगस्यान्तेअवसाने प्रकृतिःजगदुपादानभूतामाया कार्यप्रपञ्चं-
स्वकार्यभूतमखिलंप्रपंचं विलाप्यघटादिकंमृदादाविवस्वस्यांविली-
नंकारयित्वा रामस्य “रमन्तेयोगिनोऽनन्तेसत्यानन्देचिदात्मनि ।
इतिरामपदेनासौपरंब्रह्माभिधीयते” इतिश्रुत्यारामपदाभिधेयस्य-
परब्रह्मणः यत्रयस्यांतनौशरीरेस्वरूपेअस्तिलीनंवर्तते । तस्यांराम-
स्यतनौ दयिताप्रियासीताईक्षितादृष्टेतिहनूमतआवेदनंउक्तिस्तज्जः-
प्रमोदआनन्दः नममौनमातिस्म । अत्रयत्ररामतनौकार्यप्रपंचेनसह-
प्रकृतिरस्तीत्याधारस्यातिविशालत्वंप्रदर्श्यतत्रनममावित्याधेयस्या-
नन्दस्याधिक्यंवर्णितम् ॥ १२८ ॥

उपजातिभेदः—अधिकालंकारभेदः ॥

कियद्विशालं कवितल्लजानां वाग्ब्रह्म वल्मीकजनुर्मुखानाम् ।
सीतापते संहतयोऽपि यत्र विश्रान्तिमृच्छन्ति भवद्गुणानाम् ॥

विशालादाधेयाद्यदाधारस्याधिक्यंतदप्यधिकंतदुदाहरति ।
कियदिति । वल्मीकजनुर्मुखानांवाल्मीकिप्रभृतीनांकवितल्लजानां-
कविश्रेष्ठानां विशालंविस्तृतंवाक्शब्दएवब्रह्मपरवस्तुकियत्अपरि-
मितमित्यर्थः । यत्रहेसीतापतेभवतःगुणानांसंहतयस्ततयोऽपिवि-
श्रान्तिमसंकुचितावस्थानमृच्छन्तिप्राप्नुवन्ति । गुणसंहतीनामाधे-



यानांविश्रान्तिमृच्छन्तीत्यसंकटावस्थानोक्त्या वाग्ब्रह्मणआधि-
क्यंवर्णितम् । यद्यपिकियद्वाग्ब्रह्मेत्याधारस्यप्रशंसाक्रियते तथापि-
तनुत्वेनसिद्धवत्कृतस्यशब्दब्रह्मणोगुणसंहत्यधिकत्वेनाधिकरणत्वंप-
रिकल्प्यैव प्रशंसाक्रियतइतितत्प्रशंसा प्रस्तुतगुणसंहतिप्रशंसाया-
मेवपर्यवस्यति ॥ १२९ ॥

उपजातिभेदः—अल्पालङ्कारः ।

राम त्वदाख्याङ्कितमङ्गुळीयं सीताकरे कङ्कणवद्विधाय ।
एकत्र पाणौ वलयं परत्र विधातुकामेव विराजते स्म ॥

अल्पंतुसूक्ष्मादाधेयाद्यदाधारस्यसूक्ष्मता । स्वापेक्षयासूक्ष्मा-
दाधेयादाधारस्यसूक्ष्मतायत्तदल्पनामालङ्कारः तमुदाहरति । रामे-
ति । रामवियोगकृशाङ्गींसीतामालोक्यराममासाद्यसीतावृत्तान्तं-
निवेदयतोहनूमतउक्तिरियम् । हेरामतवाख्ययानाम्नाङ्कितमङ्गुळी-
यंप्रत्यभिज्ञानायमयादत्तांतवमुद्रिकां सीताविरहकृशाङ्गुलौधर्तु-
मानुगुण्याभावंमन्वाना कङ्कणवद्वलयवदेकत्रकरेविधायलम्बितंकृ-
त्वा करद्वयवलयधारणसम्प्रदायमनुसृत्य परत्रपाणावितरकरेऽपि-
वलयंविधातुकामेवधर्तुकामेवविराजतेस्म । अत्राङ्गुलीयंतावद-
ङ्गुलिमात्रपरिमितत्वात्सूक्ष्मं तदपिविरहिण्याःकरेकङ्कणवल्लम्बि
तंप्रवेशितमित्युक्त्या ततोऽपिकरस्यविरहकाश्र्यादतिसौक्ष्म्यंदर्शि-
तम् ॥ ३० ॥

विपरीताख्यानिकावृत्तम्—अन्योन्यालङ्कारः ।

रसालवृक्षेण विभाति मल्ली मल्या यथा भाति रसालवृक्षः ।
तथैव रामेण विभाति सीता रामो दुहित्रा जनकस्य भाति ॥

अन्योन्यंनामयत्रस्यादुपकारःपरस्परम् । यत्रपरस्परमुपका-

रः तत्रान्योन्यालङ्कारस्तमुदाहरति । रसालेति । रसालश्चूतःजनकस्यदुहित्रासीतया । समन्वयस्स्पष्टः ॥ १३१ ॥

उपजातिभेदः—विशेषालङ्कारः ।

राकाशशाङ्केऽद्य तिरोहितेऽपि पयोमुचा राहुमुखं गतेऽपि ।
ज्योत्स्ना तदीया वदनं प्रविष्टा वैदेहि ते ह्लादयतेतरां माम् ॥

विशेषःख्यातं [प्रसिद्धं] आधारंविनाऽप्याधेयवर्णनं । तमुदाहरति । राकेति । मेघावरणोपरागयुक्तराकायांसोल्लासंसीतांदृष्ट्वारामोक्तिरियम् । हेवैदेहि अद्यास्मिन्नहनिराकाशशाङ्केपूर्णिमाचन्द्रेपयोमुचामेघेनतिरोहितेऽन्तर्हितेऽपिराहोर्मुखंगतेप्रविष्टेऽपि तस्यराकाशशाङ्कस्येयंतदीया ज्योत्स्नाचन्द्रिकातेतववदनंमुखंप्रविष्टासतीरामंमांह्लादयतेतरामतिशयेनसन्तोषयति । अत्रप्रसिद्धाधारस्यचन्द्रस्याभावेऽपितच्चन्द्रिकायास्सीतावदनस्थितिरुक्ता ॥ १३२ ॥

उपजातिभेदः—विशेषभेदः ।

मल्लीप्रसूनद्युतिदन्तपङ्क्तिर्विभाति सीता पुरतश्च पश्चात् ।
अन्तश्च पार्श्वद्वितये किमर्थमन्वेषणीया भवता मया वा ॥

विशेषस्सोऽपियद्येकंवस्त्वनेकत्रवर्ण्यते । तमुदाहरति मल्लीति । भावनामयसीतांसर्वत्रपश्यतोरामस्यलक्ष्मणमालोक्येयमुक्तिः अत्रार्थस्समन्वयश्चस्पष्टः ॥ १३३ ॥

उपजातिभेदः—विशेषभेदः ।

मदाश्रमे कोसलजाकुमार निर्विघ्नलेशं मखकर्म कर्तुम् ।
त्वां साम्प्रतं लब्धवता मया यः प्रह्लादमावीद्भगवान्स लब्धः ॥

किञ्चित्पदार्थारम्भेणाशक्यस्यवस्त्वन्तरस्यकृतिरपिविशेषालङ्कारस्तमुदाहरति मदिति । दशरथसकाशाद्राममात्मयज्ञरक्षणा-



यस्वाश्रममानयतोमध्येमार्गेविश्वामित्रस्यराममालोक्येयमुक्तिः । कोसलजायाः कौसल्यायाःकुमारराम ममाश्रमेनिर्विघ्नलेशंईषदपिप्रत्यूहंविना मखकर्मयज्ञकर्मकर्तुं सांप्रतमद्यत्वांलब्धवताप्राप्तवतामया यःहिरण्यकशिपुंहत्वाप्रह्लादमावीद्रक्षितवान्सभगवान्नरहरि-र्विष्णुरेवलब्धः । अत्ररामलाभारम्भेणनरहरिविष्णुलाभरूपाशक्यवस्त्वन्तरकृतिः ॥ १३४ ॥

उपजातिभेदः—व्याघातालङ्कारः ।

लोके प्रियं यत्स्मर तत्सुमन्ते शरत्वमाप्याप्रियतामुपैति ।
शीतं हिमं यद्भुवने तदिन्दोः रश्मित्वमाप्तं भजते महौष्ण्यम् ॥

यत् यत्साधनत्वेनलोकेऽवगतंतत्केनचित्तद्विरुद्धसाधनंक्रियेतचेत्सव्याघातः । यद्वा यत्साधनतयाकेनचिदुपात्तंतदन्येनतत्प्रतिद्वंदिनातद्विरुद्धसाधनंक्रियेतचेत्सोऽपिव्याघातस्तत्रप्रथममुदाहरतिलोकइति । सीताविरहाग्नितप्तस्यरामस्यमन्मथचन्द्रोपालम्भरूपंवचनमिदम् । हेस्मरकाम लोकेयत्सुमंपुष्पंप्रियंप्रीतिकरं तत्तेतवशरत्वंबाणतामाप्यआसमन्तादाप्त्वा अप्रियतांअप्रीतिकरतामुपैतिप्राप्नोति भुवनेजगतियद्धिमंतुहिनंशीतंशैत्यगुणयुक्तंतदिन्दोश्चन्द्रस्यरश्मित्वंकिरणतांआप्तंप्राप्तंसत्महत्औष्ण्यंउष्णतांभजतेलभते । अत्रप्रीतिकरणसाधनत्वेनलोकेऽवगतंपुष्पंमन्मथेनाप्रीतिकरणसाधनंक्रियते शैत्यकरणसाधनत्वेनलोकेऽवगतंहिमंचन्द्रेणौष्ण्यकरणसाधनंक्रियतइतिप्रथमोव्याघातः ॥ १३५ ॥

उपजातिभेदः—द्वितीयव्याघातः ।

एका सती रव्युदयं निरास्थद्यं भर्तृजीवस्थितये गिरैव ।
इयं समस्तस्थितयेऽनसूया प्रावर्तयज्जानकि तं तयैव ॥

द्वितीयव्याघातमुदाहरतिएकेति । अत्रिमहर्षेराश्रमंप्रविष्टस्य-रामस्यसीतामालोक्यपतिव्रतारत्नानसूयामहिमनिरूपणपरमिदं व-चनम् । हेजानकिसीते एकासतीकौशिकीनामपतिव्रता भर्तुःपत्यु-र्जीवस्यप्राणस्यस्थितयेरक्षणाय गिरैववाचैवरवेरुदयंनिरास्थन्निराक-रोत् । इयमनसूयातुसमस्तस्य प्राणिसङ्घस्यस्थितयेतयैवगिरैवतं-रवेरुदयंप्रावर्तयत्प्रवर्तितवती । अत्रैवंपुराणकथा—कौशिकीनामप-तिव्रताभर्तारंमंसमारोप्यरात्रौगाढान्धकारेवेश्यागृहंनयन्ती मध्येमा-र्गेशूलारोपितस्य माण्डव्यमुनेस्स्वभर्तृपादसंघट्टनेनचालितस्यस-ञ्जातवेदनस्य कुपितस्य "अयितवभर्तारवेरुदयेमरिष्यति"इतिशापं-श्रुत्वारवेरुदयोमाभूदितिगिरमुवाच । ततोबहून्दिवसान्रवेरुदयाभा-वाल्लोकस्थितिर्विनष्टाभूत् । तदनुसर्वेदेवाः "उष्णमुष्णेनशाम्यती-ति" न्यायमनुसृत्यरवेरुदयायानसूयांप्रार्थयामासुः । साऽपिकौशि-कीप्रतिद्वन्द्वितयाखेरुदयोभूयात्कौशिकीपतिरपिनम्रियतामितिच -गिरमुवाच । तदनुयथापूर्वंरवेरुदयोऽभूदिति । अत्रसूर्योदयाभाव-साधनत्वेनकौशिक्यारवेरुदयोमाभूदितिगीरुपात्ता, तद्विरुद्धसूर्यो-दयसाधनत्वेनतत्प्रतिद्वन्द्वितयाऽनसूययाऽपिरवेरुदयोभूयादितिगी-रेवोपात्तेतिलक्षणसमन्वयः ॥ १३६ ॥

उपजातिभेदः—व्याघातभेदः ।

पित्राज्ञया त्वं विपिनं यियासुर्यमब्रवीर्मामबलेत्यनेतुम् ।
सहात्मना हेतुमबाधनीयं सएव नेतुं रघुनाथ हेतुः ॥ ३७ ॥

कार्यविशेषनिष्पादकतयाकेनचित्संभाव्यमानादर्थादन्येनकार्य-विरोधिक्रिया सौकर्येण [कारणस्यानुगुण्याधिक्येन] समर्थ्यतेचे-त्सोऽपि व्याघातस्तमुदाहरति पित्रिति । अबलात्वेनहेतुनात्मानंव-



नमनेतुकामंप्रियंतेनैवहेतुनाऽत्मानंवनंनेतुंप्रार्थयन्त्यास्सीतायाउक्ति-रियम् । हेरघुनाथरामपितुराज्ञयाविपिनंवनं यातुमिच्छुर्यियासुस्त्वं-आत्मनास्वेनत्वयासहमांविपिनमनेतुमप्रापयितुमबलेति बलंशरी-रदार्ढ्यंतद्रहिता शीतोष्णादिसहनराक्षसादिभीतिकरप्राणिसङ्कु-लवननिवासक्षमशक्तिरहितेतियावत् तस्मादत्रैवनगरेसुखेनस्था-तुमर्हेतियं अबाधनीयमप्रतिषेध्यंहेतुमब्रवीरवदः । मामात्मनासह-विपिनंनेतुं सएवहेतुः । अबलेत्येतदेवकारणं बलंसहायस्तद्रहिता-सर्वसुखास्पदश्रेष्ठसहायभूतभवद्रहितेत्यर्थः । तस्मादत्रनगरेसुखेन-कथंवर्तेय ततस्त्वयासहैवनेतव्येत्यर्थः । अत्रवनप्रयाणोन्मुखेनरा-मेणसीतायानगरएवस्थापनेयत्कारणत्वेनसंभावितमबलात्वं तत्प्र-त्युततद्विरुद्धस्यसहनयनस्यैवकारणतयासीतयापरित्यागस्यायुक्त-त्वंदर्शयन्त्यासमर्थ्यते ॥ १३७ ॥

उपजातिभेदः—कारणमालालङ्कारःप्रथमः ।

आस्तिक्यबुद्धिर्मखकार्यहेतुर्मुखक्रिया चित्तविशुद्धिहेतुः ।
चित्तस्य शुद्ध्या श्रवणादिवृत्तिः राम त्वमाप्यः श्रवणादिवृत्त्या ॥

उत्तरोत्तरकारणभूतपूर्वपूर्वैः पूर्वपूर्वकारणभूतोत्तरोत्तरैर्वा-वस्तुभिः कृतोगुम्भः (रचना) कारणमाला । तत्राद्यांकारणमाला-मुदाहरति । आस्तिक्येति । अस्तिपरलोकसुखादिकमितिमतिरस्ये-त्यास्तिकस्तस्यभावआस्तिक्यं तद्युक्ताबुद्धिरास्तिक्यबुद्धिःश्रद्धेत्य-र्थः मखकार्यहेतुःयज्ञानुष्ठानकारणं मखक्रियायज्ञानुष्ठानंचित्तस्य-मनसश्शुद्धेर्हेतुः चित्तस्यशुद्ध्याश्रवणादौश्रवणमनननिदिध्यासना-दौवृत्तिःप्रवृत्तिर्जायतइतिशेषः । श्रवणादिवृत्त्याहेरामत्वंआप्यःप्रा-प्तुंयोग्योभवसि । समन्वयस्स्पष्टः । १३९ ॥

गीतिवृत्तम्—कारणमालालङ्कारो द्वितीयः ।

पापादुपैति नरकं पापं कामादिसंभवं तेऽपि ।
असतां भवन्ति सङ्गाद्राम त्वदभक्तिसम्भव स्सोऽपि ॥
साऽपि च मनसोऽशुद्ध्या मनसोऽशुद्धिर्मखक्रियाऽभावात् ।
सोऽपि श्रद्धाऽभावात्तस्माच्छ्रद्धान्वितो भवेल्लोकः ॥

द्वितीयांकारणमालांगीतिभ्यामुदाहरति। पापादिति । सापीतिच । लोकोजनःपापान्नरकमुपैति पापंकामादिजन्यं तेऽपिकामादयोऽपिअसतांसङ्गाद्भवन्ति सोप्यसत्सङ्गोऽपिहेरामत्वदभक्तिसंभवस्तवभक्त्यभावजन्यः । साऽपिचत्वदभक्तिश्चमनसःअशुध्याजायते मनसःअशुद्धिःमखक्रियायाःयज्ञानुष्ठानस्याभावाज्जायते सोऽपियज्ञानुष्ठनाभावोऽपिश्रद्धायाआस्तिक्यबुद्धेरभावाज्जायते तस्माल्लोकःश्रद्धयाअन्वितोयुक्तोभवेत् । अत्रापिसमन्वयस्स्पष्टः ॥ १४१ ॥

उपजातिभेदः—एकावल्यलङ्कारः ।

कर्णान्तयाते नयने भुजाप्तौ कर्णौ भुजौ जानुविलम्बमानौ ।
जानुद्वयं सन्मणिदर्पणाकृत्यथो न रामस्य समो न कोऽपि ॥
सभा हि सा यत्र वसन्ति वृद्धा वृद्धास्तु ते ये प्रवदन्ति धर्मम् ।
धर्मस्स यः कोसलजाकुमारसन्नामसङ्कीर्तनपुण्यरूपः ॥
न सा सभा यत्र न सन्ति वृद्धाः वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मस्स नो यस्तु रघूत्तमस्य न नामसङ्कीर्तनपुण्यरूपः ॥

गृहीतमुक्तरीत्यार्थश्रेणिरेकावलिर्मता । उत्तरोत्तरस्यपूर्वपूर्वविशेषणभावः पूर्वपूर्वस्योत्तरोत्तरविशेषणभावोवा गृहीतमुक्तरीतिस्तयानिबद्धार्थपङ्क्तिरेकावलिरलङ्कारःद्विविधः तत्रप्रथममुदाहरति कर्णेत्यादिभिस्त्रिभिश्श्लोकैः । रामस्यनयनेनेत्रे कर्णयोरन्तंयाते-



प्राप्ते कर्णौ भुजौआप्तौभुजाप्तौ भुजौ जानुनोःविशेषेणलम्बमानौ जानुनोर्द्वयं सतोःश्रेष्ठयोर्मणिदर्पणयोःरत्नादर्शयोराकृतिरिवाकृतिराकारोयस्यतथाभूतं अतःएतादृशविशिष्टावयववत्वस्यान्यत्रासम्भवाल्लोके रामस्यसमस्तुल्यःकोऽपिनास्ति ॥ १४२ ॥ सभेति । साहिसभापरिषत् यत्रयस्यांसभायां वृद्धाःविद्यावृद्धाःधनवृद्धावयोवृद्धाश्चवसन्तिसासभेतिपूर्वेणसंबन्धः । वृद्धास्तुते येधर्मंप्रवदन्ति धर्मःसः यः कोसलजाकुमारस्यरामस्यसत्श्रेष्ठंनामरामनामतस्यसङ्कीर्तनमुच्चारणमेवपुण्यंपावनंरूपंयस्यतथाभूतस्सएवोत्तमोधर्मइत्यर्थः । अस्मिन्श्लोकेपूर्वश्लोकेचएकावळिगतगृहीतमुक्तरीतेराद्यप्रकारोविधिमुखेनप्रोक्तः ॥ १४३ ॥ नसेति। स्पष्टोऽर्थस्समन्वयश्च अत्रएकावळिगतगृहीतमुक्तरीतेराद्यप्रकारोनिषेधमुखेनोक्तः ॥

हवींषि यत्र हूयन्ते यत्कान्तादेष जायते ।
यस्तेन वर्धते युक्तस्ताश्शङ्करदृशस्स्तुवे ॥

हवींषीति यत्राग्नौहवींषिचरुपुरोडाशादीनिहूयन्ते । एषःअग्निर्यत्कान्तात्यस्यसूर्यस्यकान्तात्दृषदःसूर्यकान्ताज्जायते। यश्चन्द्रस्तेनसूर्येणयुक्तोवर्धते । ताएताःपूर्वोक्ताग्निसूर्यचन्द्ररूपाः शङ्करस्य दृशोनेत्राणि स्तुवेस्तौमि । अत्रएकावलिगतगृहीतमुक्तरीतेर्द्वितीयः प्रकारःप्रोक्तः । रामस्तुतौशङ्करस्तुतेःप्रसक्तिरभेदाभिप्रायेणनेतव्या यद्वा शेषधर्मैरामस्यशिवावतारत्वेनप्रोक्तत्वाच्छिवस्तुतिरपिरामस्तुतिरेव ॥ १४५ ॥

उपजातिभेदः—मालादीपकालङ्कारः ।

आप्तं शुचा पङ्क्तिरथस्य चित्तं रघूत्तमस्तेन रघूत्तमेन ।
कान्तारमध्यस्थतपस्विसङ्घो निर्भीति वेदोदितकर्म तेन ॥

आसादितं रामकरेण चापं चापेन बाणा रजनीचराणाम् ।
शिरांसि बाणैर्धरणीतलं तैरक्षय्यसौख्यं धरणीतलेन ॥

दीपकैकावलीयोगान्मालादीपकमिष्यते । तदुदाहरतिआप्तमिति । शुचा (विश्वामित्रेणनीयमानस्यबालस्यरामस्यविरहंकथंसहेयेतिचिन्तासञ्जातेन) दुःखेन पङ्क्तिरथस्यदशरथस्यचित्तमाप्तमासादितं । तेनचित्तेनरघूत्तमआप्तः रघूत्तमेनकान्तारस्यवनस्यमध्यस्थानांतपस्विनांविश्वामित्राश्रमगतमुनीनांसङ्घआप्तः । तेनकान्तार······सङ्घेन निर्भीतिनिर्भयंवेदोदितंकर्मआप्तम् ॥ १४६ ॥ पुनरपितदेवोदाहरति । आसादितमिति रामस्यकरेणचापंधनुरासादितंप्राप्तं चापेनबाणाश्शराआसादिताः बाणैरजनीचराणांराक्षसानांशिरांस्यासादितानि । तैरजनीचरशिरोभिर्धरणीतलंभूतलमासादितं धरणीतलेनाक्षय्यंक्षेतुमशक्यंराक्षसाद्युपद्रवाभावादभङ्गुरंसौख्यमासादितम् । पूर्वश्लोकेआप्तमित्येकंपदं शुचापङ्क्तिरथस्यचित्तमित्यादिषुचतुर्षुवाक्येषुतत्तदुचित लिङ्गविपरिणामेनान्वेतीतिदीपकम् । चित्तादीनामुत्तरोत्तरविशेषणभावरूपगृहीतमुक्तरीतिसद्भावादेकावलीचेतिदीपकैकावलियोगः । अस्मिन्श्लोकेआसादितमित्येकंपदं रामकरेणचापमित्यादिषुपञ्चसुवाक्येषु तत्तदुचितलिङ्गवचनविपरिणामेनान्वेतीतिदीपकम् । चापादीनांउत्तरोत्तर······योगः ॥

वसन्ततिलकवृत्तम् गीतिवृत्तंच सारालङ्कारः ।

द्राक्षारसालपनसादिफलानि यानि लोकेषु तानि मधुराणि ततोऽपि रुच्ये
दुग्धं सिता मधु ततो मधुरं ततोऽपि पीयूषवत्सुमधुरं तव नाम राम ॥
पायसपानकमोदकलड्डुकमाध्वीकदधिफलाज्यानि ।
रुचिराणि ततो रुचिरा सुधा ततो नाम राम ते रुचिरम् ॥



उत्तरोत्तरमुत्कर्षस्सारइत्यभिधीयते । तंवसन्ततिलकवृत्तेनोदाहरति द्राक्षेति लोकेषुजगत्सु [रसालंचूतविशेषफलं] द्राक्षा···फलानियानिसन्तितानिमधुराणि ततोपिद्राक्षादिभ्योपिदुग्धंक्षीरंसिताशर्कराचोभेरुच्येमधुरे ततोदुग्धसिताभ्यांमधुमाध्वीकंमधुरं ततोमधुनोपिपीयूषवदमृतवत्हेरामतवनामसुष्टुमधुरं ॥१४८॥ पुनरपितमेवगीत्योदाहरति पायसेति माध्वीकंमधु सुधाअमृतं शिष्टंस्पष्टं श्लोकद्वयेचश्लाघ्यगुणोत्कर्षः । अश्लाघ्यगुणोत्कर्षस्योदाहरणं । तृणाल्लघुतरस्तूलस्तूलादपिचयाचकः । वायुनाकिंननीतोसौमामयंप्रार्थयेदिति । श्लाघ्याश्लाघ्यगुणोत्कर्षस्योदाहरणं । गिरिर्महान्गिरेरब्धिर्महानब्धेर्नभोमहत् । नभसोपिमहद्ब्रह्मततोप्याशागरीयसी । इति । अत्रब्रह्मपर्यन्तेषुमहत्त्वंश्लाघ्यगुणः आशायामश्लाघ्यगुणः ॥

हरिणप्लुतावृत्तं—यथासंख्यालंकारः ।

रघुवंशभुवा श्रयता त्वया वर सता मटवीं हरिणप्लुताम् ।
निहताः प्रणता दलिताः श्रितः निशिचरा मुनय स्तरवो हरिः ॥

क्रमेणोक्तानांपदार्थानांतेनैवक्रमेणान्वयो यथासंख्यालंकारस्तं "सयुगंसलघूविषमेगुरुर्युजिनभौचभरौहरिणप्लुता" इतिलक्षणवतातेनवृत्तेनोदाहरति रघ्विति सतांसत्पुरुषाणांवरश्रेष्ठराम रघुवंशभुवारघुकुलजातेन हरिणप्लुतांमृगसंचारवतीमटवींवनंश्रयताआश्रयतात्वयानिशिचराराक्षसानिहताःसंहृताः मुनयःअगस्त्यादयःप्रणताः नमस्कृताः तरवःसप्तसालादलिताःपाटिताः सुग्रीवःश्रितआश्रितः । समन्वयःस्पष्टः ॥ १५० ॥

अपरवक्त्रवृत्तं—पर्यायालंकारः ।

त्रिशिरसमिदमाह राघवस्त्वदपरवक्त्रमुपैति गर्जितम् ।
मुखयुगमपहाय खण्डितं मम विशिखैरवशिष्टमद्य ते ॥

क्रमेणानेकाश्रितत्वंपर्यायालंकारस्तं "अयुजितुननरालगौसमेतदपरवक्त्रमिदंनजौजरौ" इतिलक्षणवताअपरवक्त्रवृत्तेनोदाहरति त्रीति राघवः त्रीणिशिरांसियस्यतंत्रिशिरसंतदाख्यराक्षसंक्रमेणस्वशरकृत्तमुखद्वयमवशिष्टतृतीयमुखेनगर्जन्तमिदंवक्ष्यमाणमाह किमिति तेराक्षसस्यतव गर्जितंवीरवादो रामस्यममविशिखैश्शरैः खण्डितंकृत्तं तेतवमुखयुगंवदनद्वयं [कर्म] अपहायक्रमेणहित्वा अद्यसंप्रति अवशिष्टं त्वदपरवक्त्रंतवापरंकृत्तप्रथमद्वितीयमुखतः अन्यत्तृतीयंवक्त्रंमुखमुपैतिश्रयति । अत्रैकस्यगर्जितस्यक्रमेणप्रथमद्वितीयमुखरूपानेकाधारसंश्रयणंपर्यायः यद्यपिप्रथमद्वितीयमुखसंश्रयणंकण्ठतोनोक्तंतथापि मुखयुगमपहायेतितत्परित्यागोक्त्याप्राक्तत्संश्रयाक्षेपेणपर्यायनिर्वाहः एवंचास्मिन्नुदाहरणेपूर्वाधारद्वयसमाश्रयणंगम्यं उत्तराधारसमाश्रयणंशाब्दम् ॥ १५१ ॥

गीतिवृत्तं—सर्वत्रशाब्दपर्यायः ।

द्राक्षामुख्यफलेषु प्रागथ दुग्धे ततः सिताद्येषु ।
मधुनि ततोऽथ सुधायां मधुर निवासोऽद्य रामनाम्नि तव ॥

सर्वत्र (सर्वाधारसमाश्रयणांशे) शाब्दंपर्यायंगीत्योदाहरति द्राक्षेति हेमधुर मधुरगुण तवप्राक्प्रथमतःद्राक्षामुख्येषुद्राक्षाप्रभृतिफलेषु निवासःस्थितिरासीदितिशेषः अथदुग्धेपयसि ततःसिताद्येषुशर्करारसखण्डादिषुततोमधुनिमकरन्दे अथसुधायाममृते अद्यसंप्रति रामनाम्निनिवासोस्तीतिशेषः ॥ १५२ ॥

उपजातिभेदः—संकोचपर्यायः ।

खलावलिक्षिर्बहुदेशचारं कृत्वा ततो दण्डककाननादौ ।
विश्रम्य शत्रुघ्न तटेऽर्कपुत्राः कुत्रापि कोणेऽद्य तटिद्वदस्ति ॥



संकोचपर्यायमुदाहरति खलेति यमुनातटस्थमधुवनवासिमुनिहिंसकंलवणासुरंहन्तुंशत्रुघ्नंप्रेषयतोरामस्योक्तिरियं । हेशत्रुघ्न खलानांदुष्टानांसुबाहुराक्षसादीनामवलिक्षिर्मुनिहिंसनरूपगर्वंकृत्यं सिद्धाश्रमादिषुबहुषुदेशेषुचारंसंचारंकृत्वा ततोदण्डककाननादौदण्डकारण्यलंकादौविश्रम्यविश्रान्तिप्राप्य अद्यसंप्रति अर्कपुत्र्यायमुनायास्तटेतीरेकुत्रापिकचित्कोणेभागेमधुवनेतटिद्वद्विद्युदिवदृश्यादृश्यरूपास्ति । पूर्वयोःश्लोकयोरुक्तंपर्यायद्वयंशुद्धं अत्रखलावलिस्तेरुत्तरोत्तरमाधेयसंकोचात्संकोचपर्यायः ॥ १५३ ॥

उपजातिभेदः—विकासपर्यायः ।

वृत्तिं व्यतानीदयि चित्तमात्रे रक्ताकरः शूर्पणखे भवत्याः ।
वक्त्रोरुवक्षोरुहपाणिपादमुखाखिलांगेष्वपि वर्ततेऽद्य ॥

विकासपर्यायमुदाहरति वृत्तिमिति कृत्तनासांसर्वांगसान्द्ररक्तांशूर्पणखामालोक्यकस्यचिदुक्तिरियं । अयिशूर्पणखेरक्तस्यशोणितस्यानुरागस्यच्चआकरःखनिस्समुद्रोवारक्तभूमेत्यर्थः भवत्यास्तवचित्तमात्रेकेवलेमनस्येववृत्तिंस्थितिंव्यतानीद्वितनोतिस्म । अद्याधुनावक्त्रादिसर्वावयवेष्वपि वर्तते । अपिशब्दाच्चित्तेपीत्यर्थः । अत्ररक्ताकरस्यपूर्वाधारापरित्यागेनाधारान्तरस्थितिरिति विकासपर्यायः ॥ १५४ ॥

उपजातिभेदः—पर्यायभेदः ।

यत्राभवत्प्राग्वसु नास्ति भिक्षो गच्छेति वाक्तत्र मुखेऽद्य भिक्षो ।
आगच्छ भुङ्क्ष्वार्थितमर्पयेयमितीरणं रामकटाक्ष एषः ॥

एकस्मिन्नाधारे क्रमेणयद्यनेकंभवतिसोपिपर्यायस्तमुदाहरति यत्रेति प्राक्पुरा रामकटाक्षाभावाद्दारिद्र्यमनुभवतोयस्यजनस्यय-

त्रयस्मिन्मुखेहेभिक्षोयाचक वसु तुभ्यंदातुंमयिकिमपिधनं नास्तित-तोगच्छेतिवाग्वचन मभवत् । अद्यसंप्रति रामकटाक्षावाप्तधनस्य-वदान्यस्यतस्यैवतत्रतस्मिन्नेवमुखे हेभिक्षोआगच्छ भुङ्क्ष्वभोजनम-त्रकुरु अर्थितंयाचितंधनादिकमर्पयेयंदद्यामितीरणमुक्तिर्भवतीतिय-देषःरामस्यकटाक्षोदयाद्दृष्टिविशेषः अत्रसमन्वयः स्पष्टः ॥ १५५ ॥

उपजातिभेदः—परिवृत्त्यलंकारः ।

प्रसूनमेकं बहुभक्तिपूर्वं समर्प्य तुभ्यं रघुवंशकेतो ।
विना प्रयासं भवतः सकाशदादत्त भक्तश्चतुरः पुमर्थान् ॥
भूयिष्ठभक्त्या फलपल्पमेकं भक्तेन दत्तं रघुवंशकेतुः ।
प्रीत्या गृहीत्वा चतुरः पुमर्थान्तयैव विश्राणितवाननल्पान् ॥
राम त्वदाराधनतत्परेभ्यः स्वदेशिकेभ्यः कतिचिद्धनानि ।
बहूनि भक्ताः प्रतिपाद्य तेभ्यश्शुभाक्षतानाददिरे जगत्याम् ॥

न्यूनाधिकयोःपरस्परंविनिमयःपरिवृत्यलङ्कारस्तमुदाहरतिप्र-सूनमिति। भूयिष्ठेति। रामेति । प्रसूनंपुष्पं आदत्तगृहीतवान्। चतुरः चतुस्सङ्ख्यान्पुमर्थान्धर्मार्थकाममोक्षरूपपुरुषार्थान् । भूयिष्ठभक्त्या अधिकतमभक्त्याअल्पमणुअनल्पान्महतःविश्राणितवान्दत्तवान्। प्र-सूनमितिश्लोकेसमर्पितवस्तुनः प्रसूनस्यस्वरूपगतमल्पत्वंगम्यंस--ङ्ख्यागतमल्पत्वमुक्तम्।गृतीतवस्तूनांपुमर्थानांस्वरूपगतमहत्वंगम्यं-सङ्ख्यागतंमहत्वमुक्तम्। भूयिष्ठेतिश्लोकेगृहीतवस्तुनःफलस्यालपमे-कमितिपदाभ्यांस्वरूपगतंसङ्ख्यागतंचाल्पत्वंकण्ठतउक्तम् ।तथास-मर्पितवस्तूनामपिपुमर्थानामनल्पान् चतुरइतिपदाभ्यांस्वरूपगतसं-ख्यागतमहत्वेकण्ठतउक्ते ॥ १५६—१५७ ॥ रामेति । जगत्यांभुवि-कतिचिद्भक्ताः हेरामत्वदाराधनेतवपूजनादौतत्परेभ्यआसक्तेभ्य-



स्स्वदेशिकेभ्यस्स्वगुरुभ्योबहूनिधनानिप्रतिपाद्यदत्वा तेभ्यस्तत्त-द्गुरुसकाशाच्छुभाक्षतान्आददिरेगृहीतवन्तः । अत्रसमर्पितवस्तूनां धनानांस्वरूपगतंमहत्वंगृहीतवस्तूनामक्षतानांस्वरूपगतमल्पत्वंच-प्रसिद्धम् । एवं । जीर्णकन्थांप्रदायैतेनरानगरवासिनः । वनवासिपु-ळिन्देभ्यःकस्तूरींजगृहुःपराम् । (कन्थांशीतनिवारिणींपुलिन्दाश्श-बराः) इतिश्लोकेसमर्पितकन्थारूपवस्तुस्वरूपगतमल्पत्वंगृहीतक-स्तूरीरूपवस्तुस्वरूपगतंमहत्वंचज्ञेयम् ॥ १५८ ॥

पुष्पिताग्रावृत्तम्—परिसङ्ख्यालङ्कारः ।

त्वयि जनिमति राम खं सदोषाकरमयि भूमितलं न पुष्पिताग्रान् ।
श्रयति मधुपसंहतिस्तरून्नो द्विजवरमण्डलमण्डिताग्रहारान् ॥

परिसंख्यानिषिध्यैकमेकस्मिन्वस्तुयंत्रणम् । एकंवस्तुप्रतिषि-द्ध्यापरस्मिन्वस्तुनोनियमनंपरिसङ्ख्यालङ्कारः । तं “अयुजिनयुगरे-फतोयकारोयुजिचनजौजरगाश्चपुष्पिताग्रा ” इतिलक्षणवतापुष्पि-ताग्रावृत्तेनोदाहरति त्वयीति । अयि हे रामत्वयिजनिमतिउत्पत्ति-मतिसति खंगगनमेवसदोषाकरंदोषाकरैः पापिभिःदोषाकरेणरज-नीकरेणचन्द्रेणचसहितं भूमितलंभूमण्डलंसदोषाकरंपापिसहितंन । किंचमधुपानांभ्रमराणांमद्यपायिनांचसंहतिस्सङ्घः पुष्पितानिसं-जातपुष्पाण्यग्राणियेषांतथाभूतान्तरून्श्रयत्याश्रयति । द्विजवराणां-त्रैवर्णिकश्रेष्ठानांमण्डलेनबृन्देनमण्डितान्भूषितानग्रहारान्ब्राह्मणा-धिवासान्नश्रयति । अत्रनिषेधश्शाब्दः ॥ १५९ ॥

उपजातिभेदः—परिसङ्ख्यायामार्थोनिषेधः ।

त्वयि क्षितिं शासति रामचन्द्र खलस्थितिर्नूतनधान्यराशेः ।
कुशासनं मन्त्रजपप्रयोगे चाञ्चल्यमासीच्च तटिल्लतायाम् ॥

परिसंख्यायामार्थनिषेधमुदाहरति त्वयीति । हेरामचन्द्रत्वयिक्षितिंभुवंशासतिपालयतिसति खलस्थितिःखलेधान्योत्पवनस्थलेस्थितिर्वृत्तिःखलैर्दुर्जनैस्सहस्थितिर्वासश्च नूतनानांनवानांउत्पवनार्हाणांधान्यानांराशेःसंचयस्यैव नान्यस्याधिकारिकादेरितिनिषेधआर्थः । कुशासनं कुत्सितंनिन्दितंशासनमाज्ञाकुशनिर्मितासनंच मन्त्रजपप्रयोगेब्रह्मयज्ञादिमन्त्रजपानुष्ठानएव नान्यत्रराजामात्यादावितिनिषेधआर्थः ["दर्भाणांमहदुपस्तीर्योपस्थंकृत्वाप्राङासीनस्स्वाध्यायमधीयीतेति" श्रुतेः ब्रह्मयज्ञजपादौकुशदर्भाद्यासनंविहितम्] चाञ्चल्यंचञ्चलत्वंचपलमनस्त्वंचतटिल्लतायांलतासदृशविद्युत्येव नतुस्त्रीजातावितिनिषेधआर्थः ॥ १६० ॥

उपजातिभेदः—विकल्पालङ्कारः ।

सीतामुखं वा रजनीकरं वा पङ्केरुहं वाद्य विधे महत्या ।
सन्दर्शय त्वं दयया नचेत्स्याः मदीयबाणैर्दलिताखिलाङ्गः ॥

विरोधेतुल्यबलयोर्विकल्पालङ्कृतिर्मता । तामुदाहरति । सीतेति । सीताविरहावस्थामनुभवतोवर्षासुमेघैर्जलपूरैश्चान्तर्हितत्वात्तन्मुखसदृशंचन्द्रंकमलंचापश्यतोरामस्योन्मत्तप्रलपितमिदम् "हेविधेनियते सीतायामुखंवारजनीकरंचन्द्रंवापङ्केरुहंकमलंवाद्य संप्रतिमहत्यादययासंदर्शयदृष्टिगोचरंकुरु नचेत्दृष्टिगोचरंनकुर्यायदि तदात्वंमदीयबाणैर्दलितानिभिन्नानिअखिलान्यङ्गानियस्यतथाभूतस्स्याः । अत्रदयाकारितत्वेनप्राप्तानामाह्लादकारिसीतामुखचन्द्रकमलसन्दर्शयितृत्वानांयुगपदुपस्थितानां युगपत्कर्तुमशक्यानांविकल्पः ॥ [सीतामुखस्य अहनिरात्रौ च सन्दर्शयितृत्वसंभवेऽपिचन्द्रस्याहनिकमलस्य रात्रौसन्दर्शयितृत्वासंभवाद्युगपत्त्रयाणामशक्यत्वमिति भावः] ॥ १६१ ॥



वसन्तमालिकावृत्तम्—समुच्चयालङ्कारः ।

रघुनाथ तवारिराक्षसा ये रहितास्तेऽद्य वसन्तमालिकाभिः ।
विनमन्ति पतन्ति निश्वसन्ति प्रलपन्त्यात्तभया गुहां द्रवन्ति ॥

बहूनांयुगपद्भावभाजांगुम्भस्समुच्चयः युगपद्भावोभवनं तद्भाजांबहूनांगुम्भोनिबन्धोवर्णनंसमुच्चयालङ्कारस्तं "विषमेससजागुरूसमेचेत्सभरायश्चवसन्तमालिकास्यादिति" लक्षणवतावसन्तमालिकावृत्तेनोदाहरति । रघ्विति । रामेणसिद्धाश्रमेनिहतशेषान्धावतोराक्षसानालोक्य विश्वामित्रशिष्याणामुक्तिरियं । हेरघुनाथराम येतवारयोरिपवोराक्षसावसन्तपुष्पमालाधारिणस्सन्तस्त्वयासहयोद्धुमागतास्तेऽद्यआत्तभयाःभीतिमाप्ताःवसन्तमालिकाभिःपूर्वंधृताभिर्वसन्तकालसंभूतवकुलादिपुष्पमालाभीरहितास्सन्तो विनमन्तिविनतिंकुर्वन्ति पतन्ति निश्वसन्तिनिश्वासंकुर्वन्ति प्रलपन्त्यार्तप्रलापान्कुर्वन्ति गुहांप्रतिद्रवन्ति धावन्ति ॥ अत्राविरोधेनसंभावितयौगपद्यानांविनत्यादीनांगुम्भनंसमुच्चयः ॥ १६२ ॥

वसन्ततिलकावृत्तम्—समुच्चयभेदः ।

अप्रार्थितप्रियकरत्वमनात्मशंसा श्रद्धा मखादिषु विनीतिरचञ्चलत्वम् ।
आसक्तिरात्मदमने श्रुतवत्सलत्वं रामं वदत्यनुपमं परमाभिजातम् ॥

अहंप्रथमिकाभाजामेककार्यान्वयेऽपिसः । यत्रैकःकार्यसिद्धिहेतुत्वेनप्रक्रान्तस्तत्रान्येऽपियद्यहमहमिकयाखलेकपोतन्यायेनतत्सिद्धिं कुर्वन्तिसोऽपिसमुच्चयस्तमुदाहरति । अप्रार्थितेति । अप्रार्थितमयाचितंयथातथाप्रियकरत्वं अनात्मशंसाआत्मप्रशंसाभावः मखादिषुयज्ञादिषुश्रद्धा आस्तिक्यबुद्धिः विनीतिर्विनयः अचञ्चलत्वंचापल्याभावः आत्मदमनेमनोनिग्रहेआसक्तिः श्रुतेवेदशास्त्रश्रवणादौव-

त्सलत्वंप्रीतिः राममनुपममसदृशं परमाभिजातंश्रेष्ठकुलसम्भवं वदति । सर्वप्रथमान्तानांराममनुपमंपरमाभिजातंवदतीत्यनेनान्वयः अत्राभिजातत्वेऽप्रार्थितप्रियकरत्वमेकंपुष्कलंकारणं तादृगेवानात्मशंसादिकमपि तत्साधनत्वेनावतरति ॥ १६३ ॥

स्रग्धरावृत्तम्—कारकदीपकालङ्कारः ।

अन्तश्चञ्चूर्यतेऽयं प्रभुरयि पथिक क्रूरदृष्ट्येक्षते त्वां
ब्रूते किञ्चित्स्वभृत्यं नुदति तव बहिर्दूरनिष्कासनाय ।
गच्छ द्राग्भारमूढ्वा शिरसि परगृहद्वारवेद्यां जपेति
श्रीरामाङ्ग क्वचित्प्राग्धनिगृहतलपूर्दासिकाऽभीषयन्माम् ॥

क्रमेणैककारकगतानां क्रियाणांगुम्भः कारकदीपकालङ्कारस्तंस्रग्धरयोदाहरति । अन्तरिति । अयिहेपथिकपान्थायंप्रभुरेतद्गृहस्वामी अन्तःगृहमध्ये चञ्चूर्यतेआभीक्ष्ण्येनचरति त्वांक्रूरयातीव्रयादृष्ट्यादृशाईक्षतेपश्यति किञ्चित्किमप्याक्रोशवाक्यब्रूतेवदति तवबहिर्गृहाद्बहिर्दूरेनिष्कासनायनिस्सारणायस्वस्यभृत्यंकिङ्करंनुदतिप्रेरयति तस्मात्कारणात्द्राक्छीघ्रंभारंमूतंशिरस्यूढ्वाधृत्वागच्छ परस्यान्यस्यगृहस्यद्वारेद्वारसमीपेस्थितायांवेद्यांवेदिकायांजपादिकंकुर्विति अङ्गहेश्रीरामप्राक्पुराक्वचित्कुत्रचित्प्रदेशे धनिनःकस्यचिद्धनिकस्यगृहस्यतलंपुनातीतितलपूः अङ्गणसंमार्जयित्री दासिकाअल्पादासी मामभीषयद्भीषितवती । अत्रप्रभोः कर्तृकारकस्यैकस्याभीक्ष्ण्यचरणादिष्वन्वयः ॥ १६४ ॥

उपजातिभेदः—समाध्यलङ्कारः ।

मानातिगं मैथिलराजपुत्र्याः मानं विनेतुं रघुवंशकेतोः ।
पतिष्यतः पादयुगे तदीये महोपकृत्यै जलदो जगर्ज ॥



केनचिदारिप्सितस्यकार्यस्यकारणान्तरसंनिधानाद्यत्सौकर्यंतत्समाधिः । द्वितीयसमुच्चयप्रतिद्वन्द्वीसमाधिरयम् । तत्रहिबहूनांप्रत्येकंसमर्थानांखलेकपोतन्यायेनयुगपत्कार्यसाधनार्थमवतारः । अत्रत्वेकेनकार्येसमारिप्सितेऽन्यस्यकाकतालीयन्यायेनापतितस्यतत्सौकर्याधायकत्वमात्रम् । तंसमाध्यलंकारमुदाहरति । मानेति । मैथिलराजपुत्र्यास्सीतायाः मानातिगंअमितंमानंप्रणयकलहजनितमभिमानंचित्तसमुन्नतिंविनेतुंनिवारयितुं तस्याइदंतदीयंतस्मिन्तदीयेपादयोर्युगेद्वयेपतिष्यतःप्रणामंकरिष्यतः रघुवंशकेतोःरामस्यमहोपकृत्यैमहोपकाराय जलदोमेघोजगर्जगर्जतिस्म । अत्रप्रणिपातएवाभिमानभञ्जनेपुष्कलंकारणंनजलदगर्जनमपेक्षते । दैवादापतताजलदगर्जनेनतत्सौकर्यमात्रंकृतम् ॥ १६५ ॥

शार्दूलविक्रीडितवृत्तम्—प्रत्यनीकालङ्कारः ।

राम त्वन्मुखतश्शशी भयमितस्त्वद्गात्रकान्त्या जितं
मेघं प्राप्य तदन्तरेव समयं कृत्वा कियन्तं स्थितिम् ।
धैर्यादेष विनिर्गतस्तव वधूकैश्येन तुल्यं तमो
दूराद्दूरतरं जवेन महता निर्वासयन्बाधते ॥

प्रत्यनीकंबलवतश्शत्रोःपक्षेपराक्रमः । बलवतश्शत्रोः पक्षे[पक्षान्तःपातिनितदीये] यःपराक्रमस्तत्प्रत्यनीकं तदुदाहरति रामेति । हेरामतवमुखतोमुखाद्भयंइतःप्राप्तएषशशीचन्द्रस्तव गात्रस्याङ्गस्यकान्त्याजितंमेघंसहायंप्राप्य तस्यमेघस्यान्तरेवमध्यएवकियन्तंसमयंकञ्चित्कालंस्थितिंवासंकृत्वा तत्रैवधैर्याद्धैर्यंप्राप्य[ल्यब्लोपेपञ्चमी] विनिर्गतस्तववध्वास्सीतायाःकैश्येनकेशसमूहेनतुल्यंसमानंतत्पक्षीयंतमोऽन्धकारं महताजवेनवेगेनदूराद्दूरतरमतिशयेनदूरंदेशंनि-

वासियन्विद्रावयन्बाधतेहिनस्ति । अत्रप्रतिपक्षेरामस्यमुखेप्रतिकर्तुमशक्तस्यचन्द्रस्यरामवधूकेशसदृशत्वेनतदीयान्धकारबाधनंप्रत्यनीकम् । एवंबलवतिप्रतिपक्षेप्रतिकर्तुमशक्तस्यतदीयबाधनं प्रत्यनीकमितिस्थितेसाक्षात्प्रतिपक्षेपराक्रमःप्रत्यनीकमितिकैमुतिकन्यायेनफलति तद्यथा । मायामृगंपुरस्कृत्यसीतांजह्रेदशाननः । शाखामृगंपुरस्कृत्यरामोहन्तिस्मतत्कुलम् । मायेति । मायामृगंमारीचंपुरस्कृत्यप्रथमंरामाश्रमंचारयित्वाशाखामृगंहनूमन्तंपुरस्कृत्यदूत्यव्याजेनप्रथमंलङ्कांचारयित्वा । शिष्टंस्पष्टम् ॥ १६६ ॥

उपजातिभेदः—काव्यार्थापत्तिरलङ्कारः ।

इतो भरद्वाजमुनेर्निवासात्प्राप्तुं पुरस्थं भरतं हनूमन् ।
पथि स्थितानां तरणं नदीनां कियत्तवोत्तीर्णकबन्धराशेः ॥

कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते । दण्डापूपिकान्यायेनार्थस्यसंसिद्धिःकाव्यार्थापत्तिः । तामुदाहरति । इतइति भरद्वाजाश्रमात्स्वप्रवृत्तिभरतायातिशीघ्रंनिवेदयितुंमारुतिंप्रेषयतो मार्गमध्यस्थमहानदीतरणमतिशीघ्रनिवेदनप्रतिबन्धकमाशङ्क्यमनसिसमाहितवतोरामस्योक्तिरियम् । हेहनुमन्नितोऽस्माद्भरद्वाजमुनेर्निवासादाश्रमात्पुरस्थमयोध्यासमीपगतनन्दिग्रामस्थितंभरतंप्राप्तुं पथिस्थितानांगङ्गायमुनागोमतीप्रभृतीनांनदीनांतरणमतिक्रमणमुत्तीर्णः कबन्धराशिःसमुद्रोयेनतथाभूतस्यतवकियत्कियन्मात्रमित्यर्थः । अत्रसमुद्रंतीर्णवतःकिमुवक्तव्यंनद्यस्सन्तार्याइतिदण्डापूपिकान्यायेननदीतरणरूपस्यार्थस्यसंसिद्धिः काव्यार्थापत्तिः ॥ १६७ ॥

उपजातिभेदः—काव्यलिङ्गालङ्कारः ।

मंस्यते मतिरियं मम यत्तत्सेत्स्यति त्वरितमत्र न शङ्का ।
ग्रावकङ्ककरटप्रियकृन्मे वस्तु तिष्ठति परं ह्यधिचित्तम् ॥



समर्थनीयस्यार्थस्यकाव्यलिङ्गमलङ्कृतिः । समर्थनापेक्षस्यार्थस्यसमर्थनंकाव्यलिङ्गंतदुदाहरति । मंस्यतइति । इदंमत्कृतापदुद्धरणस्तवगतंपद्यम् । ममेयंमतिर्यन्मंस्यतेचिन्तयिष्यतेतत्त्वरितंशीघ्रंसेत्स्यतिसिद्धिमेष्यतीत्यत्रविषयेशंकासन्देहोनास्ति । हियतः मेममाधिचित्तंचित्ते ग्राव्णःशिलायास्तद्रूपाहल्यायाइत्यर्थः कंकस्यगृध्रस्यजटायुषःकरटस्यकाकरूपजयन्तस्यचप्रियकृत्परमुत्कृष्टंवस्तुरामाख्यंब्रह्मतिष्ठत्यस्ति । अत्रचिन्तितशीघ्रसिद्धिर्दुर्लभत्वात्समर्थनसापेक्षातस्याअधिचित्तंग्रावादिप्रियकृत्परंरामाख्यंवस्तुतिष्ठतीतिस्वमनसिरामसंनिधानप्रदर्शनेनसमर्थनं इदंवाक्यार्थहेतुकंकाव्यलिंगम् । पदार्थहेतुकंकाव्यलिंगंयथा—रुच्येतृप्तिकरेरामत्वदाख्याभिख्यसारघे । मन्मनश्चञ्चरीकोयंलीयतेऽत्यन्ततृष्णया । रुच्यइति हेरामरुच्येमधुरेतृप्तिकरेच त्वदाख्यातवनामेतिअभिख्यानामयस्यतथाभूतेसारघेमधुनि अयंममनएवचञ्चरीकोभ्रमरःअत्यन्तंभृशंतृष्णयाआशयालीयतेलीनोभवति । अत्रनाम्नोमधुत्वमप्रसिद्धमितितत्समर्थनेरुच्येतृप्तिकरेइतिपदार्थद्वयंहेतुः ॥ १६८ ॥

उपजातिभेदः—अर्थान्तरन्यासालंकारः ।

रामस्समुत्पाटितराक्षसाद्रिः पृथ्व्यां प्रतिष्ठापितमित्रकल्पकः ।
भुजेन भूमिं धरतेऽङ्गदोपमं कोनाम भारोऽद्भुतवीर्यशालिनाम् ॥

उक्तिरर्थान्तरन्यासःस्यात्सामान्यविशेषयोः । सामान्यविशेषयोर्द्वयोरप्युक्तिरर्थान्तरन्यासः । तयोश्चैकंप्रस्तुतमन्यप्रदस्तुतंभवति । ततश्चविशेषेप्रस्तुतेतेनसहाप्रस्तुतसामान्यरूपस्यसामान्येप्रस्तुते तेनसहाप्रस्तुतविशेषरूपस्यवार्थान्तरस्यन्यसनमर्थान्तरन्यासइत्युक्तंभवति । तत्राद्यमुदाहरति रामइति रामःपृथ्व्यांभुविउत्पाटिताःविनाशिताः विराधखरदशाननादिराक्षसाएवअद्रयःपर्वतायेनतथा-

भूतः प्रतिष्ठापिताःमित्राणिसुग्रीवविभीषणादिसुहृदएवकल्पकाःकल्पवृक्षाःयेनतथाभूतश्चसन् भुजेनबाहुनाभूमिंअङ्गदोपमंअङ्गदतुल्यंयथातथाधरते । अद्भुतेनाश्चर्यकरेणवीर्येणशौर्येणशालन्तेप्रकाशन्तेताच्छील्येनेत्यद्भुतवीर्यशालिनस्तेषामघटितघटनायामपिकोनामभारः । नकोपीत्यर्थः । अत्राद्भुतवीर्यशालिनांसर्वंदुर्भरत्वाभावेनाप्रकृतेनसामान्येनशत्रुपाटनमित्रस्थापनपूर्वकरामभुजमहीधरणस्यप्रकृतविशेषस्यसमर्थनम् ॥ १६९ ॥

अप्रकृतेन विशेषेण प्रकृतसामान्यसमर्थनं ।

सुमित्रापुत्र पश्य त्वं दुःखं दुःखानुगाम्यहो ।
तत्रैवाङ्घ्रौ पुनर्घातो यत्र घातः पुराऽजनि ॥ १७० ॥

सुमित्रेति । सीताविरहदुःखितस्ययोजनबाहुनाऽकृष्टस्यरामस्योक्तिरियम् । अहोहेसुमित्रापुत्रलक्ष्मणत्वंपश्य आगन्तुकंदुःखंदुःखानुगामिपूर्वंदुःखानुसरणशीलंभवति । इदंप्रकृतसामान्यमप्रकृतविशेषेणसमर्थयते । तत्रेति । यत्राङ्घ्रौचरणेपुराघातःशिलादिसंघट्टनमजनिअभूत् तत्रैवाङ्घ्रौपुनर्घातोभवति । अत्राप्रकृतेनपूर्वचरणघातानुसार्युत्तरचरणघातरूपविशेषेणदुःखानुसारिदुःखरूपसामान्यस्यसमर्थनम् ॥ १७० ॥

प्रकृतेन विशेषेणाप्रकृतसामान्यसमर्थनं यथा ।

नीचोऽपि किञ्चिदुपकृत्य यदृच्छयैव
श्रेष्ठात्मनां जगति याति महोन्नतत्वम् ।
काचिद्वने शबरजातिवधूः फलानि
दत्वा रघूत्तमसुताय विमुक्तिमागात् ॥

नीचइति । जगतिनीचोऽल्पोऽपिश्रेष्ठात्मनांमहात्मनांयदृच्छयैवाकस्मिकतयैवकिञ्चिदुपकृत्योपकारंकृत्वा महदुन्नतत्वमौन्नत्यं



याति । वनेकाचिच्छबरजातौपुलिन्दजातौसंभूतावधूःस्त्री रघूत्तमस्यदशरथस्यसुतायरामायफलानिदत्वाविमुक्तिंमोक्षमागात्प्राप्नोतिस्म । वसन्ततिलकावृत्तम् । अत्रशबरीवृत्तान्तेनप्रकृतेनविशेषेणाप्रकृतस्यमहात्मोपकृतिप्रयुक्तमहोन्नतत्वरूपसामान्यस्यसमर्थनम् ॥१७१

गीतिवृत्तम्—विकस्वरालङ्कारः ।

गुरुवचसा स्त्रीहननं गुणिनस्तव राम नापकीर्तिकरम् ।
सुकृतचयेह्यघमेकं मज्जति विषनैल्यमिव शिवाङ्गरुचौ ॥

यत्रकस्यचिद्विशेषस्यसमर्थनार्थंसामान्यंविन्यस्यतत्प्रसिद्धावप्यपरितुष्यताकविना तत्समर्थनायपुनर्विशेषान्तरमुपमानरीत्याऽर्थान्तरन्यासविधयावाविन्यस्यतेतत्रविकस्वरालङ्कारः । तत्राद्यमुदाहरति । गुर्विति । हेरामगुणिनःप्रशस्तगुणगणशालिनस्तव गुरोर्विश्वामित्रस्यवचसाऽऽज्ञावाक्येन स्त्रीहननंताटकामारणमपकीर्तिकरमयशस्करंनभवति । हियतःसुकृतचयेपुण्यसङ्घेएकमघंपापंशिवस्याङ्गानामवयवानांरुचौकान्तिपुञ्जेषुविषनैल्यमिवकालकूटनीलिमेवमज्जतिमग्नंभवति । अत्रस्त्रीहननमयशस्करंनभवतीतिविशेषस्सुकृतचयेएकमघंमज्जतीतिसामान्येनसमर्थितः तदपिसामान्यंसुकृतचयेपापस्यैकस्यानाकलनमनतिप्रसिद्धतयासमर्थनापेक्षंविषनैल्यमिवेत्यादिविशेषेणोपमानरीत्यासमर्थितम् ॥ १७२ ॥

मन्दाक्रान्तावृत्तम्—विकस्वरभेदः ।

धर्मज्ञत्वं तव रघुपते सत्यवाक्यं तथेदं
कार्तज्ञं च प्रियमसुमतां जायते नात्र शंका ।
सर्वै र्लोकैर्बहुशतमरश्लाघ्यते सद्गुणौघः
क्षीरं मोचा मधु च जनयेदप्रियं कस्य लोके ॥

विकस्वरेद्वितीयमुदाहरति। धर्मेति। हेरघुपतेराम तवेदंधर्मज्ञत्वंधर्मवित्वंसत्यवाक्यंयथार्थभाषणंतथाकार्तज्ञंकृतज्ञत्वंचासुमतांप्राणिनांप्रियंप्रीतिदायिजायतेभवति। अत्रविषयेशङ्कासन्देहोनास्तीत्युक्तंविशेषंसामान्येनसमर्थयते। सर्वैरिति हियतोऽत्यन्तमसदृशोऽसदृशतमः सद्गुणौघःश्रेष्ठगुणसमूहःसर्वैःलोकैर्जनैःश्लाघ्यतेप्रशस्यते। अस्मिन्सामान्येऽपिसमर्थनाकाङ्क्षायांविशेषरूपमर्थान्तरंन्यस्यति। क्षीरमिति। क्षीरंमोचा [लक्षणया] कदलीफलंमधुमाध्वीकंचेत्येतत्त्रयं लोकेकस्याप्रियमरुचिंजनयेदुत्पादयेत्। अत्र पूर्वार्धोक्तोविशेषस्तृतीयपादार्धेनसामान्येनसमर्थितस्तदपिसामान्यंचतुर्थपादोक्तेनविशेषेणसमर्थितम्॥ १७३॥

द्रुतविलम्बितंवृत्तम्—प्रौढोक्तिरलंकारः।

जनकजेऽङ्गलता कनकाचलोद्गततटिल्लतिकासदृशद्युतिः।
तव कचाश्च खरांशुसुतातटद्वयविरूढतमालचयासिताः॥

प्रौढोक्तिरुत्कर्षाहेतौतद्धेतुत्वप्रकल्पनम्। कार्यातिशयाहेतौतद्धेतुत्वकल्पनंप्रौढोक्तिस्तामुदाहरति। जनकेति। रामस्यसीतामालोक्यसोल्लासोक्तिरियम्। हेजनकजेसीतेतवअङ्गलतिकालतासदृशोमनोज्ञसवीवयवःकनकाचलेहेमाद्रौउद्गतोद्भूता यातटिल्लतिकाविद्युल्लता तत्सदृशीद्युतिःकान्तिर्यस्यास्तथाभूताऽस्ति। किंच तवकचाःकेशाःखरांशोस्सूर्यस्यसुतायायमुनायास्तटद्वये-विरूढानांउत्पन्नानांतमालानांतापिञ्छवृक्षाणांचयास्समूहाइवासिताश्श्यामास्सन्ति। अत्रतटिद्गतकान्त्यतिशयाहेतौकनकाचलोद्गतत्वेतद्धेतुत्वकल्पनं तमालगतनैल्यातिशयाहेतौयमुनातटविरूढत्वेतद्धेतुत्वकल्पनंच॥ १७४॥



उपजातिभेदः—संभावनालङ्कारः।

वक्ता यदि स्यात्फणिराट् तव स्युः प्रोक्ता गुणाः स्याद्यदि वीक्षितेन्द्रः।
पूर्णाङ्गशोभा तव वीक्षिता स्यात्तदा कदाचिद्रघुवंशकेतो॥ १७५॥

संभावनायदीत्थंस्यादित्यूहोऽन्यस्यसिद्धये। तामुदाहरति। वक्तेति। हेरघुवंशकेतोराम फणिराट्सर्पराजःसहस्रद्वयजिह्वश्शेषो वक्तातवगुणानांवदितास्याद्यदितदाकदाचित्तवगुणाःप्रोक्तास्स्युः। इन्द्रस्सहस्राक्षोवीक्षितातवाङ्गशोभायाद्रष्टास्याद्यदि तदाकदाचित्तवपूर्णासमस्ताङ्गशोभावीक्षितादृष्टास्यात्। अत्रसमन्वयस्स्पष्टः॥

गीतिवृत्तम्—मिथ्याध्यवसित्यलङ्कारः।

खकुसुमधरेण बधिरश्राव्या वन्ध्यासुतेन गीयन्ते।
स्वरमष्टममाश्रयता रावणसद्गुणगणा रघूत्तंस॥ १७६॥

कस्यचिदर्थस्यमिथ्यात्वसिध्यर्थंमिथ्याभूतार्थान्तरकल्पनंमिथ्याध्यवसितिः। तामुदाहरति। खेति। रामनिकटेरावणसद्गुणाभावंवर्णयतोविभीषणस्योक्तिरियम्। हेरघूत्तंसराम रावणस्यसद्गुणगणाःअविद्यमानाःधर्मज्ञत्वादिश्रेष्ठगुणनिकराः बधिरैरविद्यमानकर्णेन्द्रियपाटवैःश्राव्याःश्रोतुमर्हास्सन्तः खकुसुमधरेणअविद्यमानगगनपुष्पधारिणाऽष्टमस्वरंनिषाधादिसप्तस्वरेभ्योऽतिरिक्तमविद्यमानंस्वरमाश्रयतागृह्णतावंध्यायास्सुतेनाविद्यमानेनगीयन्ते। अत्ररावणेधर्मज्ञत्वादिसद्गुणानामविद्यमानत्वात्तद्गानस्यमिथ्याभूतस्यात्यन्तासंभावितत्वसिद्धयेखपुष्पधारणादिरूपमिथ्यार्थान्तरकल्पनंमिथ्याध्यवसितिः॥ १७६॥

श्लोकवृत्तमुपजातिभेदौच ललितालङ्कारः।

सत्यभामे गते शीते वसनं क्रेतुमिच्छसि।

अतीते यौवने किंच परिणेतु त्वमिच्छसि ॥ १७७ ॥

क ते गुणा वर्णयितुं नशक्याः क स्वल्पबुद्धिश्च रघूत्तमाहम् ।
चर्मेव संवेष्टयितुं कराभ्यामाकाशमत्यन्तसमुत्सुकोऽस्मि ॥

स्थितिं प्रदेशः कतमस्त्वयाद्य महेन्द्रमुक्तत्रिदिवस्य नीतः ।
प्राप्स्यत्युदारान्वय कश्च देशः कुबेरयुक्तालकया समत्वम् ॥

प्रस्तुतेवर्ण्यवाक्यार्थप्रतिबिम्बस्यवर्णनं । प्रस्तुतेधर्मिणियोव-
र्णनीयोवाक्यार्थस्तमवर्णयित्वा तत्रैवतत्प्रतिबिम्बरूपस्यकस्यचिद-
प्रस्तुतवाक्यार्थस्यवर्णनंललितंतदुदाहरति । सत्येत्यादिश्लोकत्रये-
ण । हेसत्यभामेशीतेगतेसतित्वंवसनंवस्त्रंक्रेतुंक्रयेणलब्धुमिच्छसि ।
किंचयौवनेऽतीतेगतेसति परिणेतुंविवाहंकर्तुमिच्छसि। अत्रयथाक-
थश्चिद्दाक्षिण्यसमागततत्कालोपेक्षितप्रतिनिवृत्तनायिकान्तरासक्त-
नायककृष्णानयनार्थंसखींप्रेषयितुकामांसत्यभामामुद्दिश्यसख्यावच
नेनतद्व्यापारप्रतिबिम्बरूपस्यशीतनिवृत्त्यनन्तरवस्त्रक्रयस्ययौवननि-
वृत्यनन्तरपरिणयस्यचवर्णनंललितम् । एकपत्नीव्रतस्थितेरामेएता-
दृशवृत्तान्तस्यासंभवात्तदभिन्नकृष्णवृत्तानुसरणमिदम् ॥ १७७ ॥
क्वेति । हे रघूत्तमवर्णयितुंनशक्याअशक्यास्तेतवगुणाःक्व स्वल्पबु-
द्धिरत्यल्पविषयगोचरमतियुक्तोऽहंचक्व तथापिकराभ्यांचर्मैवाजि-
नमिवाकाशंसम्यग्वेष्टयितुंसङ्कोचयितुमत्यन्तंभृशंसमुत्सुकउत्क-
ण्ठितोऽस्मि । अत्राल्पविषयगोचरमतिविशिष्टोप्यहंरामगुणान्वर्ण-
यितुमिच्छुरस्मीतिप्रस्तुतवृत्तान्तानुपन्यासात्तत्प्रतिबिम्बभूतस्य-
कराभ्यांचर्मवदाकाशंवेष्टयितुमुत्सुकोऽस्मीत्यप्रस्तुतवृत्तान्तस्यवर्ण-
नंललितम् ॥ १७८ ॥ स्थितिमिति । हनुमदानीतंरामंदृष्ट्वा प्रथमतः-
सुग्रीवस्योक्तिरियम् । हेउदारान्वयमहाकुलप्रसूत त्वयाद्यसंप्रति क-



तमःप्रदेशःमहेन्द्रेणमुक्तस्यत्यक्तस्यत्रिदिवस्यस्वर्गस्यस्थितिंरीतिं-
नीतः। किंचकोदेशःकुबेरेणयुक्तयासहितयाऽळकयाऽळकापुर्यासम
त्वंसाम्यंप्राप्स्यतिगमिष्यति । अत्रकतमोदेशस्त्वयापरित्यक्तः कं-
देशंगमिष्यसिचेतिप्रस्तुतार्थद्वयमनुपन्यस्यमहेन्द्रमुक्तत्रिदिवस्थि-
तिंनीतइति कुबेरयुक्ताळकासाम्यंगमिष्यतिचेतितत्प्रतिबिम्बभूता-
र्थद्वयमात्रोपन्यासाल्ललितद्वयम् ॥ १७९ ॥

गीतिवृत्तम्—प्रहर्षणालङ्कारः ।

राधामेव निरन्तरमत्यौत्सुक्येन मनसि चिन्तयतः ।
कृष्णस्यान्तिकमेनां दूतीं का चन जिघाय गोपवधूः ॥

उत्कण्ठितार्थसंसिद्धिर्विनायत्नं प्रहर्षणम् । उत्कण्ठाविषय-
स्यार्थस्यतदुपायसंपादनयत्नंविनासिद्धिःप्रहर्षणं तदुदाहरति । रा-
धामिति । काचनगोपवधूःगोपिका निरन्तरं सदात्यौत्सुक्येनात्यु-
त्कण्ठयाराधांतदाख्यांकांचनगोपिकामेवमनसिचिन्तयतःकृष्णस्या-
न्तिकंसमीपमेनांराधामेवदूतींजिघायप्रहितवती । अत्रकृष्णस्योत्क-
ण्ठाविषयराधालाभोयत्नंविनाऽजनीतिप्रहर्षणम् ॥ १८० ॥

रथोद्धतावृत्तम्—प्रहर्षणभेदः ।

कानने मुनिगणा रघूत्तमं राक्षसान्कतिचिदेव निहन्तुम् ।
प्रार्थयन्सतु निशाचरवंशं भूमिगं निखिलमुद्धरति स्म ॥

वाञ्छितादधिकार्थस्यसंसिद्धिश्चप्रहर्षणं । तदुदाहरति कानन-
इति । उद्धरतिस्मविनाशयतिस्म । समन्वयः स्पष्टः ॥ १८१ ॥

उपजातिभेदः—प्रहर्षणभेदः ।

सीताऽऽसवं वक्त्रगमन्तिकस्थमशोकमारुह्य विमुञ्चति स्म ।
सुमेच्छया दूरगवञ्जुळे तद्द्रुमद्वयं पुष्पचितं बभूव ॥

यत्नादुपायसिध्यर्थात्साक्षाल्लाभःफलस्यच । फलोपायसिध्यर्थाद्यत्नान्मध्ये उपायसिद्धिमनवेक्ष्यापिसाक्षात्फलस्यैवलाभोऽपिप्रहर्षणं तदुदाहरति । सीतेति । सीतासुमेच्छयावकुलपुष्पेच्छया अन्तिकस्थंसमीपस्थितंवन्ध्यमविज्ञातंचाशोकवृक्षमारुह्य वक्त्रगंमुखगतमासवंमद्यंदूरगवञ्जुले वन्ध्येविज्ञातेचदूरस्थितवकुले विमुञ्चतिस्मन्यषेचयत् तदानीमेवतद्द्रुमयुग्मंतयोर्द्रुमयोरशोकवञ्जुलयोर्युग्मं पुष्पचितं "अशोकश्चरणाहत्याबकुलोमुखशीधुनेति" दोहदद्वयलाभेनकुसुमव्याप्तंबभूव । पुष्पप्रादुर्भावायज्ञातवन्ध्यवकुलदोहदमाचरितुंअविज्ञातंवन्ध्यंअशोकमारूढवत्यास्तत्रैवपुष्पलाभः ॥

वसन्ततिलकावृत्तम्—विषादनालङ्कारः ।

सीतां विमोक्ष्यति भविष्यति राघवो मे
कान्तोऽटनं च सह तेन सुखं च मे स्यात् ।
इत्याशयेन रघुनाथमुपेत्य वाञ्छा-
मप्राप्य शूर्पणखयाऽतिशुगन्वभावि ।

इष्यमाणविरुद्धार्थसंप्राप्तिस्तुविषादनं । तदुदाहरतिसीतेति राघवस्सीतांविमोक्ष्यतित्यक्ष्यति मेममकान्तःपतिर्भविष्यति तेनसहाटनंसञ्चारश्च मेममसुखंक्रीडासुखंचस्यादित्याशयेनेच्छयारघुनाथमुपेत्यप्राप्यवाञ्छांपूर्वोक्तामिच्छामप्राप्य शूर्पणखयाअतिशुक्नासिकाकर्तनजन्यमतिदुःखमन्वभाव्यनुभूतम् । समन्वयःस्पष्टः ॥

उपजातिभेदौ—उल्लासालङ्कारः ।

पतिव्रता पावयतादियं मां सर्वाशनत्वादिकलङ्कयुक्तम् ।
इतीव मत्वाऽऽदरतः प्रविष्टां विभावसुर्मैथिलजामगृह्णात् ॥
स्नात्वा जले मे जनकस्य साध्वी सुता समं धार्मिकपुङ्गवेण ।



रामेण मां पावयतात्सदेति गोदावरी प्रार्थयतेऽनुवेलम् ॥

एकस्यगुणदोषाभ्यामुल्लासोऽन्यस्यतौयदि । यत्रकस्यचिद्गुणेनान्यस्यगुणोदोषेणदोषोगुणेनदोषोदोषेणगुणोवावर्ण्यतेसउल्लासस्तत्राद्यमुदाहरति । पतीति । स्नात्वेतिच । पतिव्रतासतीयंमैथिलजासर्वाशनत्वादिभिस्सर्वभक्षकत्वादिभिःकलङ्कैर्दोषैर्युक्तंमांपावयेत्पूतंकुर्यादितिमत्वेवचिन्तयित्वेव विभावसुरग्निरादरतःप्रीत्यास्वस्मिन्प्रविष्टांमैथिलजांसीतामगृह्णाद्गृहीतवान् । अत्रपतिव्रतायास्सीतायामहिमगुणेनतदीयप्रवेशादग्नेःपावनत्वगुणोवर्णितः ॥१८४॥ स्नात्वेति । साध्वीसतीजनकस्यसुतासीता धार्मिकपुंगवेणधार्मिकश्रेष्ठेनरामेणसमंसह मेममजलेस्नात्वासदामांपावयतादिति गोदावरी अनुवेलंसदाप्रार्थयते । अत्रपतिव्रतायास्सीतायाधार्मिकश्रेष्ठस्यरामस्यमहिमगुणेन तयोःस्नानाद्गोदावर्याःपावनत्वगुणोवर्णितः ॥

विपरीताख्यानिकावृत्तम्—उल्लासेदोषेणदोषः ।

न तिष्ठ रामात्र वने सदुष्टे सीता सुरूपा तदिमामवाप्तुम् ।
मिथस्सवैरा नहि केवलं स्वं दुष्टाः कुलं वन्यकुलानि हन्युः ॥

उल्लासेदोषेणदोषमुदाहरति । नेति । वनेवसन्तंराममालोक्यकस्यचिद्दषेरुक्तिरियम् । हेरामसदुष्टेदुष्टराक्षससहितेऽत्रवनेनतिष्ठ हियतःसीतासुरूपासुन्दराङ्गी तत्तस्मात्कारणादिमामवाप्तुंदुष्टाःसुन्दोपसुन्दन्यायेनमिथःपरस्परंसवैराःशत्रुत्वसहिताःसन्तः स्वंस्वीयंकुलंकेवलंवंशमेवनहन्युः किंतुवन्यानांवनस्थितानामस्मदादीनामपिकुलानिहन्युःहिंस्युः । अत्रराक्षसानांसीताकामनाजनितपरस्परवैरदोषेणस्वपरकुलविनाशरूपदोषोवर्णितः ॥ १८६ ॥

उपजातिभेदः—उल्लासेगुणेनदोषः ।

मम प्रियाया जनकात्मजाया विहाय पूज्यास्पदमुत्तमाङ्गम् ।
समागतं त्वामभिजातरूपं चूडामणे नैव भृशं वदामि ॥

उल्लासेगुणेनदोषमुदाहरति ममेति । सीताचूडामणिंगृहीत्वा-रामस्योक्तिरियम् । हेचूडामणेममप्रियायादयितायाजनकात्मजाया-स्सीतायाःपूज्यमर्च्यमास्पदंस्थानमुत्तमाङ्गंशिरोविहायसमागतं-त्वां भृशमत्यन्तमभिजातरूपंकुलीनस्वरूपंनैववदामि । अत्रसीताशि-रस्थानगुणेनचूडामणेस्तत्परित्यागोदोषत्वेनवर्णितः ॥ १८७ ॥

गीतिवृत्तम्—उल्लासेदोषेणगुणः ।

अप्राप्य वधमिदानीं राघवतस्ताटकादिसंहर्तुः ।
राक्षसि विनैव नासां तदाश्रमात्ते बहिर्गतिः श्लाघ्या ॥

उल्लासेदोषेणगुणमुदाहरति । अप्राप्येति । रामाश्रमान्निकृत्तना-सिकांबहिर्धावमानांशूर्पणखामुद्दिश्यकस्यचिदुक्तिरियम् । हेराक्ष-सिशूर्पणखे ताटकादीनांसंहर्तुर्नाशयितुःराघवतोरामादिदानीं वध-मप्राप्य नासांनासिकांविनैव तस्यराघवस्याश्रमात्तेतवबहिर्गतिःश्ला-घ्या । अत्रराघवस्यताटकादिसंहर्तृत्वदोषेणशूर्पणखायावधाभावो-गुणत्वेनवर्णितः ॥ १८८ ॥

उपजातिभेदः—अवज्ञालङ्कारः ।

रामत्वदर्चाऽखिलमैहिकं चाप्यामुष्मिकं सौख्यमलं प्रदातुम् ।
तथापि मे फाललिपिप्रभावादीषत्सुखाप्तिः फलमेव तस्याः ॥

ताभ्यांतौयदिनस्यातांअवज्ञालंकृतिस्तुसा । [ताभ्यांगुणदोषा-भ्यांतौगुणदोषौ] कस्यचिद्गुणेनान्यस्यगुणालाभः दोषेणदोषस्या-प्राप्तिर्वाऽवज्ञालङ्कारः । तत्राद्यमुपजातिभेदेनोदाहरति । रामेति । हेरामतवार्चापूजा अखिलंसर्वमैहिकमेतल्लोकभवंपशुपुत्रादिकंच



आमुष्मिकंअमुष्मिन्लोकेभवंस्वर्गादिकमपिसौख्यं प्रदातुंअलंपर्याप्तं तथापिमेममफाललिपेःब्रह्मलिखितललाटाक्षरस्यप्रभावात् तस्याः-त्वदर्चायाःईषत्किञ्चित्सुखस्याप्तिःप्राप्तिरेवफलंभवति । अत्रसर्व-सुखप्रदरामार्चागुणेनमयिपूर्णसुखप्राप्तिरूपगुणाभावोवर्णितः ॥

मन्दा······न्तं अवज्ञायांद्वितीयम् ।

नाम श्रीमन्रघुतिलक ते कीर्तयेयं नचेत्किं
नश्येत्तस्य प्रथिततरचरी सौख्यदातृत्वसम्पत् ।
न श्रोत्राभ्यां चरितमधु ते चेत्पिबेयं तदा का
हानी रामायणमुखमहाग्रन्थराशेरुदीयात् ॥

अवज्ञालङ्कारेद्वितीयंमन्दाक्रान्तावृत्तेनोदाहरति । नामेति । श्रीमन् सीतारूपश्रीयुक्त रघुतिलकहेराम तेतवनामआख्यांनकीर्त-येयंचेत्नोच्चारयेयंयदि तदातस्यनाम्नःपूर्वमतिशयेनप्रथिताप्रसिद्धा-प्रथिततरचरीसौख्यदातृत्वसम्पत्सर्वसुखप्रदातृत्वमहिमानश्येत्किं-विनष्टाभवेत्किं तेतव चरितंचरित्रमेवमधुमाध्वीकं श्रोत्राभ्यांनपि-बेयंचेत्तदा रामायणमुखानांरामायणप्रभृतीनांमहतांग्रन्थानांराशेस्स-मूहस्य काहानिःलोपउदीयादुद्भवेत् । अत्रमदनङ्गीकरणदोषेणराम-नामरामायणादेस्सौख्यदातृत्वाभाववैयर्थ्यरूपदोषाभावोवर्णितः ॥

स्रग्धरा—अनुज्ञालङ्कारः ।

जीर्णा मय्येव सन्तु त्वदुपकृतिचया वायुसूनो भवेयं
दोषाणामास्पदं प्रत्युपकृतिविरहात्ते तदङ्गीकरोमि ।
कर्तुं प्राज्योपकारं तव खलु लषता स्यान्मया प्रार्थनीया
व्यापत्तिस्ते तदङ्गीकरणमसुकरं मादृशैस्सत्यमेतत् ॥

दोषस्याभ्यर्थनानुज्ञातत्रैवगुणदर्शनात् । तांस्रग्धरयोदाहरति ।

जीर्णेति । हनुमन्तंप्रतिराघवोक्तिरियम् । हेवायुसूनोहनुमन् त्वयाकृताःउपकृतीनामुपकाराणांचयास्समूहाः मय्येवजीर्णाःप्रत्युपकाराक्षमास्सन्तु तेतवप्रत्युपकृतेःप्रत्युपकारस्यविरहादभावात् दोषाणांप्रत्युपकाराभावजन्यपापानामास्पदमाश्रयोभवेयमितियत्तदङ्गीकरोमि प्रत्युपकृतिंकुर्वितिचेत्तत्राह तवखलुपुनः प्राज्यमधिकमुपकारंकर्तुंलषतेच्छतामया तेतवव्यापत्तिर्विशेषापत्प्रार्थनीयास्यात् । तस्याविपत्प्रार्थनायाअङ्गीकरणं मादृशैर्मद्विधैःपुरुषैरसुकरंदुष्करमित्येतत्सत्यमेव । अत्रप्रत्युपकाराभावोदोषस्तदभ्युपगमेहेतुर्गुणोविपत्प्रार्थनायाअप्रसक्तिः ॥ १९१ ॥

मालिनीवृत्तं शार्दू······त्तंच लेशालङ्कारः ।

भरतगतमखण्डं राज्यमक्लेशलेशं
भवति फलममुष्या मन्थरायाः कटूक्तेः ।
रघुवर वनवासस्ते फलं राक्षसोप-
द्रवमुखमतिकष्टं तातवाक्यक्रियायाः ॥
रामासत्पुरुषा यथेच्छचरिता निर्यन्त्रणास्सत्कृतौ
कृत्याकृत्यविचारणास्वचकिता धन्यास्सुखेनासते ।
सन्तस्त्वत्सदृशाः परोपकृतिषु व्याक्षिप्तचित्ता स्सिताः
गुर्वाद्युक्तिकृतौ खलोक्तिचकिता जीवन्ति दुःखं सदा ॥

लेशःस्याद्दोषगुणयोर्गुणदोषत्वकल्पनं । दोषस्यगुणत्वकल्पनं गुणस्यदोषत्वकल्पनंचलेशालङ्कारः । तं मालिन्याशार्दूलविक्रीडितेनचोदाहरति । भरतेति । रामेतिच । सीताविरहक्लिष्टंरामंप्रतिलक्ष्मणस्योक्तिरियं हेरघुवरराम भरतंगतंप्राप्तमखण्डंपूर्णमक्लेशलेशं कष्टलवेनापिरहितंराज्यममुष्यामन्थरायाःकैकीयीसख्याःकटूक्तेःक-



टुवाक्यस्यफलंभवति तेतववनवासोराक्षसोपद्रवप्रमुखमत्यन्तकष्टंच तातस्यपितुर्वाक्यक्रियायाःवनंगच्छेतिवचननिर्वहणस्यफलम् । अत्रप्रथमार्धेमन्थराकटूक्तिदोषस्यभरतराज्यप्राप्त्यनुकूलतयागुणत्वंकल्पितम् । द्वितीयार्धेपितृवाक्यकरणस्यगुणस्यवनवासादिकष्टहेतुतया दोषत्वंकल्पितम् ॥ १९२ ॥ रामेति हेराम असत्पुरुषाअसज्जनाःइच्छामनतिक्रम्ययथेच्छंचरितमाचरणंयेषांतथाभूतास्सत्कृतौसत्कार्यैनिर्यन्त्रणाबन्धनरहिताः इदंकृत्यमिदमकृत्यमित्यादिपुविचारणासुविवेकेष्वचकितानिर्भयाअतएवधन्याभाग्यवन्तश्चसन्तस्सुखेनासतेवर्तन्ते । त्वत्सदृशास्त्वत्तुल्यास्सन्तस्तु परेषामुपकृतिषूपकारेषुव्याक्षिप्तचित्ताव्याकुलमनसोगुर्वादीनांपित्राचार्यादीनामुक्तीनांवाक्यानांकृतौकरणे सिताःबद्धाः खलानांदुष्टानामुक्तेरपवादवाक्याच्चकिताभीताश्चसन्तस्सदादुःखंयथातथाजीवन्ति । अत्रासज्जनकृत्यदोषस्यसुखजीवनहेतुतयागुणत्वं सज्जनकृत्यगुणस्यदुःखजीवनहेतुतयादोषत्वंचकल्पितम् ॥ १९३ ॥

वियोगिनी (चम्पकमालिका) मुद्रालङ्कारः ।

अपि चम्पकमालिकास्पृहावशतश्चम्पकवाटिकां व्रजेत् ।
सुतरामिदमप्यसाम्प्रतं न चिरं लक्ष्मण सा वियोगिनी ॥

सूच्यार्थसूचनंमुद्राप्रकृतार्थपरैःपदैः । तां "विषमेससजागुरुःसमेसभराश्चम्पकमालिकालगौ । विषमेससजागुरुःसमेसभरालोथगुरुर्वियोगिनी" इतिलक्षणवताचम्पकमालिकावृत्तेन वियोगिनीवृत्तेनवोदाहरति अपीति । पञ्चवट्यांसीतान्वेषणेलक्ष्मणंप्रतिरामस्योक्तिरियम् । हेलक्ष्मणसासीताचम्पकपुष्पमालाशावशाच्चम्पकवृक्षवाटीमपिव्रजेद्गच्छेत्कच्चिदितियदिदमपितत्रचिरकालव-

तेनमपिसुतरांभृशमसांप्रतमयुक्तम्। यतःसाचिरंवियोगिनीमद्विर-हवतीनभवेत्। अत्रसीताविरहवृत्तान्तपराभ्यांचम्पकमालिकावि-योगिनीपदाभ्यां तद्वृत्तनामत्वरूपसूच्यार्थसूचनंमुद्रा॥ १९४॥

रत्नावल्यलङ्कारः।

लोकबन्धुं कुवलयानन्दं राम क्षमाभुवम्।
सौम्यं त्वां गीष्पतिं मन्ये कविं छायासुनन्दनम्॥

सद्योजातोऽस्यन्तस्सीतायोगेन वामदेवोऽसि।
राघव सतामघोरस्तत्पुरुषश्चास्यसीशानः॥

क्रमिकंप्रकृतार्थानांन्यासंरत्नावलींविदुः। तामुदाहरति। लो-केति। सद्यइतिच हेरामत्वांलोकबन्धुंजगतांबन्धुवद्धितकरंसूर्यंच कुवलयानन्दःभूमण्डलानन्दकरःकैरवाह्लादकरश्चन्द्रश्चतं क्षमाभु-वंक्षमागुणस्यास्पदमङ्गारकंच। सौम्यमक्रूरंबुधञ्च। गीष्पतिवाचां-पोषकंबृहस्पतिञ्च। कविंसर्वज्ञंशुक्रंच। छायासुनन्दनंछाययाका-न्त्यासुष्ठुनन्दयतीतितथाभूतस्तंछायादेव्यास्सत्पुत्रंशनिंचमन्ये। अत्रलोकबन्ध्वादिपदैर्वर्णनीयस्यरामस्यसूर्याद्यात्मताप्रतीयतइतिवा-राधीशानांसूर्यादीनांक्रमेणनिवेशनंरत्नावली॥ १९५॥ सद्यइति। हेराघवरामत्वंअन्तर्भक्तमनसि सद्यश्चिन्तनक्षणएवजातआविर्भूतो-ऽसि। सद्योजाताख्यपञ्चब्रह्मान्यतमश्चाऽसि। सीतायायोगेनसा-हित्येन वामास्त्री अस्यास्तीतिवामः [अर्शआद्यच्] दीव्यति-प्रकाशतइतिदेवःवामश्चासौदेवश्चवामदेवोऽसि वामदेवाख्यपञ्च-ब्रह्मान्यतमश्चाऽसि। सतांसाधूनांअघोरःअक्रूरःअसि अघोरा-ख्यपञ्चब्रह्मान्यतमश्चासि। तत्पुरुषः "ओंतत्सदितिनिर्देशोब्रह्मण-स्त्रिविधस्स्मृतः"इतिवचनात्तच्छब्दाभिधेयःपरमात्माऽसि॥सहस्र-



शीर्षापुरुषइतिवचनात्पुरुषशब्दवाच्यविराड्रूपश्चासि तत्पुरुषाख्य-पञ्चब्रह्मान्यतमश्चासि। ईशानःजगत्पतिरीशानाख्यपञ्चब्रह्मान्यतम-श्चासि। अत्रसद्योजातादिपदैर्वर्णनीयस्यरामस्यसद्योजाताद्यात्मता-प्रतीयतइतिपञ्चब्रह्मदेवानांसद्योजातादीनांक्रमेणनिवेशनंरत्नावली।

उपजातिभेदः तद्गुणालङ्कारः।

राम त्वदङ्गे नवनीरदाभे भक्तैर्जनैर्यानि समर्पितानि।
सितानि पद्मानि तदीयभासा नीलोत्पलान्यव विभान्ति तानि॥

तद्गुणःस्वगुणत्यागादन्यदीयगुणग्रहः। स्वगुणत्यागादन-न्तरमन्यदीयगुणग्रहणंतद्गुणालङ्कारस्तमुदाहरति। रामेति। हे-रामनवनीरदाभेनूतननीलमेघसदृशशोभेतवाङ्गे यानिसितानिश्वे-तानिपद्मानिसमर्पितानितानितस्यत्वदङ्गस्येयंतदीया याभाःकान्ति-स्तयात्वदङ्गनीलकान्त्येत्यर्थः नीलोत्पलान्येवविभान्तिप्रकाशन्ते॥

आर्यावृत्तं—पूर्वरूपालङ्कारः।

तव नासिकावलम्बितमौक्तिकमधरत्विषाऽरुणं सीते।
मन्दस्मितकौमुद्या पुनरपि धावल्यमाप्नोति॥

पुनःस्वगुणसंप्राप्तिःपूर्वरूपमुदाहृतं। तदुदाहरति। तवेति। अस्यामार्यायामुत्तरासुगीतिषुचसीतांप्रतिराघवस्यसोल्लासमुक्तिः। हेसीतेतवनासिकायामवलम्बितंमौक्तिकं तवाधरस्यत्विषाकां-त्याऽरुणंसत्पुनरपि तवमन्दस्मितकौमुद्याचन्द्रिकाधवलमन्दहासेन-धावल्यंपाण्डरतामाप्नोति। समन्वयः स्पष्टः॥ १९८॥

गीतिवृत्तं—पूर्वरूपभेदः।

निर्वापितेऽपि दीपे मन्दाक्षेण त्वयाऽद्य जनकसुते।
वज्राद्याभरणानां त्वदङ्गगानां प्रभा कथं वार्या॥

पूर्वावस्थानुवृत्तिश्चविकृतेसतिवस्तुनि । वस्तुनिविगतेसत्यपिपूर्वावस्थायाअनुवृत्तिरपिपूर्वरूपं तदुदाहरति । निरिति । हेजनकसुते अद्यक्रीडावसरेमन्दाक्षेणलज्जयादीपेनिर्वापितेऽपि त्वदङ्गगानांत्वदवयवगतानांवज्रादिभिर्वज्ररत्नादिभीरचितानामाभरणानां प्रभाकथंवार्यावारयितुंशक्या । अत्रदीपाभावेऽपितत्प्रकाशानुवृत्तिः ॥

गीतिवृत्तं—अतद्गुणालङ्कारः ।

अधरः किसलयविद्रुमसदृशीमारुण्यसंपदं त्वत्कः ।
न जहाति जनकजे ते मन्दस्मितचन्द्रिकानुषक्तोऽपि ॥

संगतान्यगुणानङ्गीकारमाहुरतद्गुणं । स्वसंबद्धोयोऽन्यःपदार्थः तद्गुणानङ्गीकारःअतद्गुणालङ्कारः । तमुदाहरति । अधरइति । हेजनकजेसीते त्वत्कस्त्वदीयःअधरओष्ठस्तेतव मन्दस्मितचन्द्रिकयाकौमुदीसदृशमन्दहासेनानुषक्तस्संबद्धोऽपि किसलयस्यपल्लवस्यविद्रुमस्यप्रवालस्यचसदृशींसमामारुण्यस्यशोणत्वस्यसंपदमाधिक्यं नजहातिनत्यजति । समन्वयःस्पष्टः ॥ २०० ॥

गीतिवृत्तं—अनुगुणालङ्कारः ।

धत्तेऽतिशोणिमानं कोकनदन्ते कराब्जगं सीते ।
इन्दीवरमपि कर्णगमतिनीलत्वं दधाति तेऽपाङ्गैः ॥

प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणःपरसन्निधेः । परसन्निधिवशात्पूर्वसिद्धस्यस्वगुणस्योत्कर्षोऽनुगुणालङ्कारस्तमुदाहरति धत्तइति । हेसीते तेतवकराब्जगंपाणिपद्मस्थितंकोकनदंरक्तोत्पलमतिशोणिमानमतिमात्रारुण्यंधत्तेवहति । अपिचतेतवकर्णगंश्रोत्रगतमिन्दीवरंनीलोत्पलं तेतवापाङ्गैःकटाक्षैरतिनीलत्वमत्यन्तनैल्यंदधाति । अत्रस्वतस्सिद्धस्यकोकनदगतारुण्यस्यकरयोगादुत्कर्षः स्वतःसिद्धस्यश्रोत्रगतनीलोत्पलनैल्यस्यापाङ्गयोगादुत्कर्षश्चवर्णितः ॥ २०१ ॥



स्वागतावृत्तं—मीलनालङ्कारः ।

इन्द्रनीलमयभूषणजातं तावके सहजनीलशरीरे ।
तत्रतत्र विनिवेशितमुच्चं लक्ष्यते रघुकुलोत्तम नैव ॥

मीलितंयदिसादृश्याद्भेदएवनलक्ष्यते । तदुदाहरति इन्द्रेति । हेरघुकुलोत्तमरामतावकेत्वदीये सहजनीलेस्वतस्सिद्धनैल्ययुक्तेशरीरेतत्रतत्रविनिवेशितंघटितमुच्चंश्रेष्ठमिन्द्रनीलमयानांभूषणानांजातंबृन्दं नैवलक्ष्यतेनदृश्यतएव । अत्ररामशरीरनीलभूषणजातयोर्नीलगुणसाम्याद्भेदानध्यवसायः ॥ २०२ ॥

आर्यावृत्तं—सामान्यालङ्कारः ।

स्वच्छेष्वभितो रामः प्रतिफलितो बहु महत्सु मुकुरेषु ।
तस्माच्छीघ्रं बिम्बप्रतिबिम्बभिदाऽत्र न स्फुरति ॥

सामान्यंयदिसादृश्याद्विशेषोनोपलक्ष्यते । तदुदाहरतिस्वच्छेष्विति । अभितःसमन्ततःस्थापितेषुस्वच्छेषुनिर्मलेषुमहत्सुबृहत्सुमुकुरेषुदर्पणेषुबिम्बभूतोरामःबहुयथातथा प्रतिफलितःप्रतिबिम्बितःतस्मात्कारणादत्रमण्टपेबिम्बस्यप्रतिबिम्बानांचभिदाभेदःशीघ्रंनस्फुरतिनजायते । मलिनालङ्कारेएकेनापरस्यभिन्नस्वरूपानवभासरूपंमीलनंक्रियते । सामान्यालङ्कारेतुभिन्नस्वरूपावभासेऽपिव्यावर्तकविशेषोनोपलक्ष्यतइतिभेदः । मीलितोदाहरणेहिसहजनैल्याद्रामशरीरस्यवस्त्वन्तरत्वेनागन्तुकमिन्द्रनीलाभरणनैल्यंनभासतेअत्रसामान्योदाहरणेतुरामबिम्बस्यतत्प्रतिबिम्बानांचव्यक्त्यन्तरतयाभानमस्त्येवअयंबिम्बोऽयंप्रतिबिम्बइतिविशेषःपरंनोपलक्ष्यते

शार्दूलविक्रीडितंवृत्तं—उन्मीलितालङ्कारः ।

राम त्वद्यशसा सिते त्रिभुवने नीहारशैलं विदुः
शीतेनैव तपस्विनस्सुरगणाः कैलासमत्युद्धतैः ।
जानन्ति प्रमथैः कृतैः कलकलैर्वीणामुनिस्सेवितुं
विष्णुं तत्पदद्दुग्धसागरमवैत्यातञ्चनात्तक्रतः ॥

मीलनालंकारन्यायेनभेदानध्यवसायेप्राप्तेकुतोऽपिहेतोर्भेदस्फूर्तौ मीलितप्रतिद्वंद्विउन्मीलितं तदुदाहरति रामेति हेरामत्रिभुवनेजगत्रयेतवयशसासितेधवलितेसति तपस्विनोहिमालयेविशेषतपस्तप्तुंगच्छन्तोमहर्षयोनीहारशैलंहिमाद्रिंशीतेनशीतगुणेनैवविदुर्जानन्ति । शिवसेवायैकैलासंगच्छन्तस्सुरगणादेवगणाःप्रमथैश्शिवपारिषदैःकृतैरत्युद्धतैरतिमहद्भिःकलकलैःकोलाहलध्वनिभिःकैलासंजानन्ति । वीणामुनिर्विष्णुभक्तोनारदोविष्णुंसेवितुं तस्यविष्णोः पदमास्पदंदुग्धसागरंक्षीरसमुद्रं तक्रतस्तक्ररूपादातंचनात्दध्यात्मनापरिणमयितृवस्तुनः अवैतिजानाति । अत्ररामयशस्सितत्रिजगतिहिमालयादीनांभेदानध्यवसायेप्राप्तेशीतादिकारणेभ्योभेदस्फूर्तिः

आर्यावृत्तं—विशेषकालंकारः ।

मुकुरगतानां परितः प्रतिबिंबानां च तव च बिबस्य ।
व्यक्तौ राघव हेतुः स्पर्शाक्षमता च तत्क्षमता ॥

सामान्यालंकारन्यायेनविशेषास्पुरणेप्राप्ते कुतश्चित्कारणाद्विशेषस्फूर्तौ तत्प्रतिद्वंद्वी विशेषकालंकारस्तमुदाहरति मुकुरेति हेराघवरामपरितस्समन्ततःस्थितान्मुकुरानादर्शान्गतानांप्राप्तानांतवप्रतिबिंबानांचतवबिंबस्यचव्यक्तौविशेषस्फूर्तौ यथाक्रमंस्पर्शाक्षमताप्रतिबिंबानांस्पर्शायोग्यताहेतुः तत्क्षमताचबिंबस्यस्पर्शयोग्यताहेतुः । अत्रसमन्वयःस्पष्टः ॥ २०५ ॥



विपरीताख्यानिकावृत्तं उत्तरालंकारः ।

पयोधरस्त्वं न बहिः प्रयाहि बाधा भवेत्तत्र पयोधरेण ।
सुखं भवेदत्र पयोधराभ्यामित्यागतं कृष्णमुवाच कुब्जा ॥

किंचिदाकूतसहितंस्याद्गूढोत्तरमुत्तरम् । किंचिदभिप्रायसहितंगूढमुत्तरमुत्तरालंकारस्तमुदाहरति पयइति स्वगृहमागत्यस्वस्याः कुब्जात्वंनिवार्यं कार्यातिशयाद्बहिःप्रयाणाय वृष्टिर्भवेद्वानवेतिपृच्छन्तंकृष्णंकामयमानायाःकुब्जायास्तंप्रत्युत्तरमिदं । पयोधरशब्दस्यस्तनोमेघश्चार्थस्तदर्थद्वयमिहाश्रितं । कश्चित्कस्यचित्स्वजात्यावैरंसुखंचभवतितदपीहोक्तं । कुब्जागडुःकाचनमधुरापुरस्थितानारी स्वगृहमागतं कार्यवशेनबहिर्जिगमिषुंकृष्णमित्युवाच किमितिहेकृष्णत्वंपयोधरोमेघः । अत्रतत्तुल्यइत्यर्थः मद्गृहंविसृज्यबहिर्नप्रयाहिमागच्छ कुतइतिचेत्तत्रबहिःपयोधरेणमेघेनबाधावृष्टिबाधाभवेत् । अत्रमद्गृहेतुस्थिताभ्यांपयोधराभ्यांमेघाभ्यांमदीयस्तनाभ्यामितिगूढाभिप्रायः सुखंभवेत् । अत्रैकस्यपयोधरस्यतवबहिर्गमने अन्येनस्वजातिपयोधरेणबाधास्यात् । अत्रस्थित्यांस्वजातिपयोधरद्वयेनसौख्यंस्यादित्यर्थः । नीलमेघश्यामलकोमलांगत्वांकामयमानायाममकुचग्रहणादिपूर्वकरतिसुखमनुभव वृष्टिबाधामनुभवितुंबहिर्मागच्छेतिगूढमुत्तरम् ॥ २०६ ॥

उद्गीतिवृत्तं—उत्तरभेदः ।

कंबलवन्तं शीतं न बाधते कोपकारी किम् ।
सुखकृत्किं रामकथाकथकं रामायणं हि भुवनेषु ॥

प्रश्नोत्तरान्तराभिन्नमुत्तरंचित्रमुच्यते । तदुदाहरति कमिति कं बलवन्तंबलिनंशीतंनबाधतइतिप्रश्नस्य कम्बलवन्तंमेषादिलोम-

रचितकंबलाच्छादनंजनंशीतंनबाधतइतितदभिन्नमुत्तरं कःअपका-
रीअपकारकृदितिप्रश्नस्यकोपकारीकोपकृदितितदभिन्नमुत्तरं । भुव-
नेषुजगत्सुकिंसुखकृत्विषयसौख्यकरमितिप्रश्नस्य किंरामकथायाः
रामचरितस्यकथकंनिवेदकमितिप्रश्नान्तरस्यच यथाक्रमं रामायणं-
रामायाःस्त्रियाःअयनंसंगमःरामाय णाख्यग्रन्थइत्येकमुत्तरम् ॥

गीतिवृत्तं—सूक्ष्मालंकारः ।

काचन गोपी कृष्णं पश्यन्तं वीक्ष्य सस्पृहातिशयम् ।
कर्णगतकुमुदकलिकां विकासयामास पाणिपद्माभ्याम् ॥

सूक्ष्मंपराशयाभिज्ञेतरसाकूतचेष्टितम् । पराशयाभिज्ञस्यपर-
विषयेसाभिप्रायंचेष्टितंसूक्ष्मं तदुदाहरति केति काचनगोपी सस्पृ-
हातिशयमत्यन्तरत्यौत्सुक्येनसहितंयथातथापश्यन्तंकृष्णंवीक्ष्य पा-
णिपद्माभ्यांकमलसदृशकराभ्यांकर्णगतांश्रोत्रस्थितांकुमुदस्यकैरव-
स्यकलिकांकोरकंविकासयामास । अत्रकामुकस्यकृष्णस्यावलोक-
नेनसंकेतकालप्रश्नभावंज्ञातवत्याःगोप्याश्चेष्टेयं । कुमुदविकासकेश-
शिन्युदितेसति संकेतकालइत्याकूतम् ॥ २०८ ॥

पृथ्वीवृत्तं—पिहितालंकारः ।

कचावृतमुखीं गलत्सुमचयां च शय्यागृहात्
सखी सविधमागतां जनकजां विलोक्योपरि ।
उदाननरघूत्तमप्रतिकृतेस्तदीयामधो-
मुखं प्रतिकृतिं व्यधात्तदितपुंस्त्वसन्दर्शिका ॥

पिहितंपरवृत्तान्तज्ञातुस्साकूतचेष्टितम् । तदुदाहरति कचेति
शय्यागृहात्शयनमन्दिरात्सविधंस्वसमीपमागतां कचैः पुरुषायि-
तदशायामाननाच्छादकैः केशैरावृतंमुखंयस्यास्तथाभूतां गलन्तः-



पतन्तःसुमचयाःकचग्रथितपुष्पसमूहायस्यास्तथाभूतांच जनकजां
सीतांविलोक्य । तदितेति तांजनकजांइतंप्राप्तंपुंस्त्वंपुरुषायितं तस्य-
सन्दर्शिकाबोधिकासखी । उदाननायाउत्तानमुख्याः रघूत्तमस्यरा-
मस्यप्रतिकृतेश्चित्रपटस्योपरि तस्यास्सीतायाइमांतदीयांप्रतिकृतिं
अधोमुखंयथातथाव्यधात्कृतवती । अत्रगलत्सुमकचावृतमुखेनानु-
मितंपुरुषायितंप्रतिकृतिविन्यासभेदेनप्रकाशीकृतम् ॥ २०९ ॥

उपजातिभेदः व्याजोक्तिरलंकारः ।

पुष्पाणि चेतुं सखि गोपि पुष्पवाटीं गताया मम कैतकानाम् ।
परागसान्द्रो भवति स्म देहस्तत्कण्टकैश्च व्रणितोऽधरोऽपि ॥

व्याजोक्तिरन्यहेतूक्त्यायदाकारस्यगोपनम् । तामुदाहरति पु-
ष्पाणीति हेसखिगोपिपुष्पाणिचेतुमुच्चेतुंपुष्पवाटींकुसुमारामंगता-
याममदेहःकैतकानांकेतकीपुष्पाणांपरागैरजोभिःसान्द्रोव्याप्तोभव-
तिस्मकिंचतेषांकैतकानांकण्टकैरधरोपिव्रणितस्संजातव्रणोऽभूत् ।
अत्रकयाचिद्गोप्यासख्याःकस्याश्चिद्गोप्यास्सविधेकृष्णेनसहचौर्येर
तिकृतसंकेतभूलुंठनधूलिजालस्य तत्कृताधरक्षतस्यचगोपनंकृतम् ॥

सीता पतिमायान्तं दृष्ट्वाऽऽनन्दाश्रुपुलककंपाद्यैः ।
भावैर्ज्ञेयं रागं सख्याः पुरतो नमन्त्यगूहत्तम् ॥

पुनरपितामेवगीत्योदाहरति । सीतेति सीता आयान्तमाग-
च्छन्तंपतिरामंदृष्ट्वा तदनुरागोद्भूतैरानन्दबाष्परोमाञ्चवेपथुप्रभृतिभि
र्भावैस्सात्विकभावैर्ज्ञेयमनुमेयंरागमनुरागं सख्याःपुरतस्तंपतिनम-
न्तीप्रणमन्तीसतीअगूहत्प्रच्छादयतिस्म । अत्रानुरागकृतस्यानन्द-
बाष्पाद्याकारस्यभक्तिरूपहेत्वन्तरप्रत्यायकेनप्रणामेन गोपनंकृतम् ॥

गीतिवृत्तं—गूढोक्तिरलंकारः ।

वृतिरहितानि परस्य क्षेत्राणि विमुच्य वृतियुतं क्षेत्रम् ।
चरसि वृषेन्द्रायाति क्षेत्रपतिस्तत्ततः पलायस्व ॥

गूढोक्तिरन्योद्देश्यंचेद्यदन्यंप्रतिकथ्यते । यंप्रतिकिंचिद्वक्तव्यंतत्तटस्थैर्माज्ञायीतितदेवतदन्यंकंचित्प्रतिश्लेषेणोच्यतेचेत्सागूढोक्तिस्तांगीत्योदाहरति वृतीति निर्यन्त्रणावह्वीःपरगोपीरुत्सृज्यसयन्त्रणांपरगोपीमेकामुपभुंजानंजारंकृष्णंप्रतिवक्तव्यं निर्वृतिकानिपरक्षेत्राणिविसृज्य सवृतिकपरक्षेत्रेसस्यानिभक्षयन्तंकञ्चिदुक्षाणंसमीपेचरन्तंनिर्दिश्यतन्मित्रेणकेनचिद्गोपेनकथ्यते । हेवृषेन्द्रवृषभश्रेष्ठ परस्यान्यस्यवृतिरहितानिकण्टकाद्यावरणरहितानिनिर्यन्त्रणानिच--क्षेत्राणिकेदारान्कलत्राणिचविमुच्यविहाय वृतियुतंपरस्यक्षेत्रंकेदारस्थितसस्यंकलत्रंचचरसिअनुभवसि । क्षेत्रपतिरायातितत्तस्मात्कारणात्ततःपरक्षेत्रात्पलायस्वदूरंगच्छ ॥ २१२ ॥

शिखरिणीवृत्तम्—गूढोक्तिः ।

नयन्धेनूर्नाथो मम वनमगान्मां तु सदने
विहायैकां श्वश्रूश्वशुरमुखगेहस्थितजनः ।
शुभायायाद्बन्धोः रजनिमशितां गाढतमसाऽऽ
गमप्रार्थ्ये श्रीश त्वमव भगवन्मामविरतम् ॥

पुनरपितांउदाहरति ।नयन्निति ।कस्याश्चित्कृष्णंजारंप्रार्थयमानायागोप्याउक्तिरियम् । ममनाथःपतिर्गोपोधेनूर्नवप्रसूताःगाःनयन्सन्वनमगात् । सदनेगृहेमामेकांविहाय श्वश्रूश्वशुरप्रमुखोगृहस्थितःजनः कस्यचिद्बन्धोश्शुभायतद्गृहमयात् अगच्छत् गाढतमसामहान्धकारेणाशितांव्याप्तांरजनिंरात्रिंव्याप्येत्यत्यन्तसंयोगेद्वितीया। आगमप्रार्थ्यआगमैर्वेदैःश्लाघनीय आगमनेनलालनीय भगवन्षड्गुणपूर्णमयिकामयुक्त श्रीशश्रीपतेलक्षितलक्षणयाकृष्णाख्यजार त्वंमामविरतंसततमवरक्ष । अत्रश्रीशनाम्नोजारस्यागमनंप्रार्थयमानायास्तटस्थवंचनायभगवन्तंप्रत्याक्रोशस्यप्रत्यायनम् ॥



गीतिवृत्तं—विवृतोक्तिरलङ्कारः ।

वृतिरहितानि परस्य क्षेत्राणि विमुच्य वृतियुतं क्षेत्रम् ।
चरसि वृषेह्यायाति क्षेत्रपतिरिति ब्रवीति साकूतम् ॥
विषमेषुपीडितानामबलासूनां गतिर्भवात्राम ।
इति सह सूचनयोक्तः प्रिययाऽवतु तां रघूत्तमः श्लिष्यन् ॥

विवृतोक्तिःश्लिष्टगुप्तंकविनाविष्कृतंयदि । श्लिष्टगुप्तंवस्तुयथाकथंचित्कविनाऽविष्कृतंचेद्विवृतोक्तिस्तामुदाहरति ॥ वृतीति । विषमेष्वितिच । वृषवृषभ इहिगच्छ साकूतंसाभिप्रायंससूचनमित्यर्थः ॥ २१४॥ विषमेष्विति । विषमेषुसंकटेषुपीडितानांसंजातपीडानां विषमेषुणामन्मथेनपीडितानांच नविद्यतेबलंशक्तिर्येषांतेऽबलाः अबलाअसवःप्राणायेषांतेषांअबलासूनांदुर्बलप्राणिनां अबलायाःस्त्रियःममासूनांच हेरामभवान्गतीरक्षकः इतिसूचनयाआकूतेनसहप्रिययासीतयोक्तःतांश्लिष्यन्नालिङ्गन्रघूत्तमोऽवतुरक्षतु । पूर्वोदाहरणेपूर्ववद्गुप्तं वस्तुसाकूतमितिकविनाऽविष्कृतमस्मिन्नुदाहरणेरामंकामयमानायाःसीतायावचनेसंकटत्राणसंप्रार्थनारूपेणशीघ्रंप्रतीयमानेनार्थेनगुप्तंविवक्षितमर्थान्तरं सहसूचनयेत्यनेनाविष्कृतम् ॥

गीतिवृत्तं—युक्त्यलंकारः ।

स्वस्याः पत्युश्च गिरः श्रुता निशायां शुकस्य गुरुनिकटे ।
प्रातर्गदतस्सीता कयापि विधया ततान वाग्बन्धम् ॥

युक्तिःपरातिसन्धानंक्रिययामर्मगुप्तये । तामुदाहरति । स्व-

स्याइति । सीतानिशायांश्रुताःक्रीडागृहेआकर्णिताःस्वस्याआत्मनःपत्युःचगिरःवचनानिप्रातर्गुरूणांश्वशुरादीनांनिकटेगदतोवदतःशुकस्य कयापिविधयाकेनापिप्रकारेण श्रुतवचनविस्मृतिकारिफलौषधादिदानेनेत्यर्थः । वाग्बन्धंवाङ्मुद्रणांततानचकार । अत्रसीतयाशुकवाग्बन्धेनात्मनःपत्युश्चक्रीडासमयप्रवृत्तवचनरूपमर्मगोपनायशुकमुखेनतच्छ्रुश्रूषुश्वशुरादिजनवञ्चनंकृतम् ॥

उपजातिभेदः—लोकोक्तिरलङ्कारः ।

भ्रातुरेष निरितो विभीषणस्त्वत्पदं शरणमाप शरण्यम् ।
राम सांप्रतमिदं गलितं यत्तत्फलं पयसि निष्पतति स्म ॥

लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते । तांरथोद्धतास्वागतामेलनोपजातिभेदेनोदाहरति । भ्रातुरिति । शरणापन्नंविभीषणमङ्गीकृतवन्तंराममालोक्यसुग्रीवस्योक्तिरियम् हेरामभ्रातुःरावणात्त्वंविसृज्येत्यर्थः । निरितोनिर्गतएषबिभीषणः शरण्यंशरणेरक्षणेसाधुसमर्थंतवपदंचरणंशरणमापेतियत्तदिदंसांप्रतंयुज्यते । यत्फलंद्राक्षादिगलितंकण्टकान्वितस्वाश्रयात्स्रस्तं तत्पयसिक्षीरेनिष्पततिस्म । अत्रगलितंफलंपयस्यपतदितिलोकप्रवादानुकृतिः ॥२१७॥

स्रग्धरावृत्तम्—छेकोक्तिः ।

सीते कोऽसौ कपिस्ते सविधमुपगतः कः कृतस्तेन साकं
संवादो राक्षसानामपि पिशितभुजः कामरूपित्ववित्तौ ।
का शक्तिर्वेद्मि कीशं दशवदनममुं मायया भिक्षुरूपं
धृत्वा प्राङ्मामुपेतं द्विरसनचरणं वेत्त्यथैव द्विजिह्वः ॥

छेकोक्तिर्यत्रलोकोक्तेस्स्यादर्थान्तरगर्भिता (अर्थान्तरव्यञ्जकता) तामुदाहरति सीतइति । हेसीतेतेतवसविधंसमीपमुपगतोऽसौकपिः (हनूमान्) कः तेनसाकंकःसंवादःसंभाषणम् त्वयाकृतः इति राक्षसीभिःपृष्टासीताप्राहराक्षसानामिति । अपिहेपिशितभुजोमांसादिन्योराक्षस्योराक्षसानांकामरूपित्वस्येच्छागृहीततत्तत्समयोचितस्वरूपस्यवित्तौज्ञानेममकाशक्तिः कीशंयुष्मत्पृष्टकपिमपिप्राक्पुरामाययाकपटेनभिक्षुरूपंयतिवेषंधृत्वामामुपेतममुंदशवदनंवेद्मिजानामि । कुतश्शक्तिर्नेतिचेत्द्विजिह्वस्सर्पएवसूचकश्च अथकात्स्न्र्येन द्विरसनानांसर्पाणांसूचकानांचचरणंपादमाचरणंचवेत्तिजानाति । अत्रराक्षसीभिःकपिवृत्तान्तंपृष्टायाःयूयमेवकपिरूपेणागतस्यरावणस्यवृत्तान्तंजानीथेत्युक्तवत्यास्सीतायाः अयमहेःपादानहिरेववेत्तीतिलोकवादानुकारः । किंचयूयंचयतिकपिवेषेणागतोरावणश्च कामरूपधारणेनस्वप्रयोजनादिसाधनव्यापारेसहचारिणइतिविदितविषयतयालोकोक्त्यनुवादस्यप्रयोजनेस्थिते रहसिपिशुनत्वादिकृत्येऽपिपरस्परंसहचराइतिमर्मोद्धाटनमपिगर्भीकृतम् ॥ २१८ ॥



स्रग्धरावृत्तम्—वक्रोक्तिः श्लेषेण ।

अङ्गुल्या कः कवाटं प्रहरति दयिते राघवः किं झपेशो
नो कोदण्डी विधिर्वा पितृपतिरपि नो श्रीपतिश्श्रीनिकेतम् ।
याहि त्वं साम्प्रतं श्रीरसि जनकसुते सेति पत्युर्यथार्थां
श्रुत्वोक्तिं मुक्तमाना कृतसमयविधिश्चाभवत्सुष्ठु सीता ॥

वक्रोक्तिःश्लेषकाकुभ्यांअपरार्थप्रकल्पनम् । श्लेषेणवक्रोक्तिमुदाहरति । अङ्गुल्येति । मानवत्याअतएवरात्रौकवाटंपिहितवत्याः सीतायास्तत्प्रसादनायागतवतःकवाटमङ्गुल्याताडयतश्चरामस्यचोक्तिप्रत्युक्तिरूपंपादत्रयम् । कः अङ्गुल्याकवाटमररंप्रहरतिताडयतीतिसीतोक्तिः हेदयितेप्रियेसीतेराघवोरामइतिरामस्यप्रत्युक्तिः

राघवशब्दस्यतिमिंगिलयूथाधिपतिरूपार्थाभिप्रायेणझषाणांमत्स्यानामीशःकिमितिपुनस्सीतोक्तिः । नो मीनपतिर्न । किंतुकोदण्डीधनुष्मान्कोटण्डपाणिरितिप्रसिद्धोरामइतिरामोक्तिः । कोदण्डीत्यस्य कोब्रह्मा दण्डीदण्डपाणिर्यमइतिपदद्वयार्थाभिप्रायेण विधिः पितृपतिरपिवाब्रह्मायमोऽपिकिमितिसीतोक्तिः । नो विधिर्यमश्चन । अपितुश्रीपतिःसीतारूपायाःश्रियस्तवपतीरामोऽहमितिरामोक्तिः । श्रीपतिशब्दस्यसाक्षाल्लक्ष्मीपत्यर्थाभिप्रायेणश्रीनिकेतंश्रियाःलक्ष्म्या निकेतंस्थानंयाहिगच्छेतिसीतोक्तिः। हेजनकसुतेसाम्प्रतंसम्प्रति (रामावतारे) त्वंसाश्रीर्लक्ष्मीरसि "राघवत्वेऽभवत्सीतेति" वचनात् । इतिपत्युर्यथार्थांसत्यांउक्तिंवाक्यंश्रुत्वा सीतामुक्तमानात्यक्ताभिमाना सुष्टुसम्यक्कृतःसमयेतत्कालेऽनुष्ठेयोविधिःकवाटोद्घाटनादिसंगमान्तकर्मययातथाभूताचाभवत् । अत्रराघवादिपदानांरामार्थाभिप्रायेणोक्तानांमीनपतित्वाद्यर्थान्तरंश्लेषेणपरिकल्पितम् इदं अविकृतश्लेषवक्रोक्तेरुदाहरणम् ॥ २१९ ॥

मालिनीवृत्तम्—विकृतश्लेषवक्रोक्तिः ।

न जयति तव सीते देवरो मत्कुमारं
नपदमधिगमिष्यत्येष मे मत्कनिष्ठः ।
अबलमधिगतस्स्यात्त्वत्पतिर्विर्णमाद्यं
पठ दशमुख पादत्रय्यवस्थं विहाय ॥

विकृतश्लेषवक्रोक्तिमुदाहरति नेति । युद्धमध्येसीतांविमोहयितुमशोकवनस्थांतामुपेत्यतयासहरावणस्यसंवादावसरेप्रवृत्तमिदंतयोरुक्तिप्रत्युक्तिरूपंवचनं । हेसीतेतवदेवरःपतिभ्रातालक्ष्मणो ममकुमारमिन्द्रजितंनजयति । एषममकनिष्ठोऽनुजोविभीषणोमेममपदंलङ्काराज्यंनाधिगमिष्यतिनप्राप्स्यति । तवपतीरामः अबलंबलस्यशक्तेर्बलानांसैन्यानांवाअभावमधिगतःप्राप्तस्स्यादितिरावणेनोक्तेसतिसीताप्राहवर्णमिति ।हेदशमुख पादत्रय्यांपूर्वोक्तपादत्रयेअवस्थास्थितिर्यस्यतंपादत्रयस्थितमित्यर्थः । आद्यंप्रथमंवर्णमक्षरंविहायत्यक्त्वापठोच्चारय । तथाच । नजयतीत्यारब्धप्रथमपादेआद्यनकारहीनेसति लक्ष्मणइन्द्रजितंजयतीत्यर्थोजायते । नपदमित्यारब्धद्वितीयपादेआद्यनकारहीनेसति विभीषणोलङ्काराज्यंप्राप्स्यतीत्यर्थोजायते । अबलमित्यारब्धतृतीयपादेआद्यकारहीनेसतिरामोबलमधिगतःस्यादित्यर्थोजायते ॥



अर्थश्लेषमूला वक्रोक्तिः ।

क सर्पसक्तः शेषाङ्गे क कपाली बलेर्गृहे ।
वृद्धः क गौर्वेत्ति गोप श्श्रीगौर्योरिति वागभूत् ॥

पूर्वोक्तंपद्यद्वयंशब्दश्लेषमूलायाःवक्रोक्तेरुदाहरणम् । अर्थश्लेषमूलायाःवक्रोक्तेरुदाहरणमाह । क्वेति । सर्पेआभरणभूतसर्पेसक्तआसक्तश्शिवःक्वेति श्रियाशिवाभिप्रायेणपृष्टेसति शेषस्यतल्पभूतस्यादिशेषस्याङ्गेसर्पसक्तोविष्णुश्शेतइतिगौर्याविष्ण्वभिप्रायेणोत्तरंदत्तमेवमुत्तरत्रापिज्ञेयम् । कपालीभिक्षुःशिवःक्वेतिपृष्टे बलेर्महाबलेर्गृहे कपालीभिक्षुर्वामनोऽस्तीत्युत्तरं । वृद्धोजरठोगौश्शिवस्यवृषभःक्वेतिपृष्टे गोपोगोपालःकृष्णएववेत्तिजानातिइति श्रीगौर्योर्वाक्परिहासवाक्यंप्रश्नोत्तररूपमभूत् ॥ २२१ ॥

द्रुतविलम्बितवृत्तम्—काकावक्रोक्तिः ।

निरपराधलवे जनकात्मजे मयि सति प्रसभात्किमु खिद्यसे ।
निरपराधलवस्त्वमभूरिति प्रहरति प्रसवेन पतिं स सा ॥

काक्कावक्रोक्तिमुदाहरति । निरिति । हेजनकात्मजेसीतेमयिनिरपराधलवेसतिअपराधलेशमप्यकुर्वतिसतीत्यर्थः । किमुकिमर्थंप्रसभाद्बलात्कारेण खिद्यसेखेदंप्राप्नोषिइत्युक्तवन्तंपतिं सासीतात्वंनिरपराधलवःअभूःइतिकाकुस्वरविकारेण निरपराधलवोनाभूरित्यर्थान्तरंप्रदर्श्य प्रसवेनकुसुमेनप्रहरतिस्मताडयतिस्म ॥ २२२ ॥

गीतिवृत्तं—स्वभावोक्तिरलङ्कारः ।

अत्यायतचकिताक्षाः स्तब्धश्रवसो विदेहजां विपिने ।
अरुणाधरकरचरणां मन्दस्मितगतिमलोकिषत हरिणाः ॥

स्वभावोक्तिस्स्वभावस्यजात्यादिस्थस्यवर्णनं । [आदिपदेनगुणक्रियापरिग्रहः] तामुदाहरति । अतीति । विपिनेवनेहरिणामृगाः अत्यायतान्यतिदीर्घाणिचकितानिभयचंचलानिचाक्षीणिनेत्राणियेषांतथाभूताः स्तब्धश्रवसोनिश्चलकर्णाश्चसन्तः अरुणं (अधरःओष्ठश्चकरौचचरणौच) अधरकरचरणंयस्याःतथाभूतां मन्दंस्मितं मन्दागतिश्चयस्याःतथाभूतां विदेहजांसीतामलोकिषताद्राक्षुः । अत्रकुरङ्गजातिस्वभावस्य सीतागतस्मितगतिरूपक्रियास्वभावस्यतदधरादिगतारुण्यगुणस्वभावस्यचवर्णनम् ॥ २२३ ॥

वसन्ततिलकावृत्ते—भाविकालङ्कारः ।

पुष्पस्रजं जनकजाकुचसीम्नि कुर्वन्
तत्स्पर्शजैः पुलकवेपथुघर्मतोयैः ।
सान्द्रोऽभवं सपदि मामवलोक्य तादृक्-
सा यत्स्मितं व्यतनुताद्य पुरोऽस्ति तन्मे ॥
लब्धा प्रिया मम विलासवचोमृतानि
पीत्वा श्रवोञ्जलियुगेन समन्दहासम् ।



यां दर्शयिष्यति विधां मिथिलेशपुत्री
सा मेऽद्य तिष्ठति पुरः स्थिरभावपुष्टा ॥

भाविकंभूतभाव्यर्थसाक्षात्कारस्यवर्णनम् । तत्रभूतार्थसाक्षात्कारंप्रथमेनभविष्यदर्थसाक्षात्कारंद्वितीयेनचवसन्ततिलकावृत्तेनोदाहरति । पुष्पेति । सीतान्वेषणकालसंभूतंरामवाक्यमिदम् । पुष्पस्रजंकुसुममालांजनकात्मजायास्सीतायाःकुचसीम्निस्तनप्रदेशेकुर्वन्घटयन्नहं तत्स्पर्शजैस्तयोस्तनयोस्स्पर्शजातैःपुलक ...... यैःरोमाञ्चकम्पस्वेदरूपसात्विकभावैस्सान्द्रोव्याप्तोऽभवम् । सपदितदैव तादृक्तथाविधा मत्करस्पर्शजातरोमाञ्चादिसात्विकभावा सासीतामामवलोक्ययत्स्मितंहासंव्यतनुताकरोत् तत्स्मितमद्यमेममपुरःपुरतोऽस्ति ॥ २२४ ॥ लब्धेति । प्रियादयितामिथिलेशपुत्रीसीतालब्धाप्राप्तासती ममविलासवचोमृतानिक्रीडावाक्यामृतानि श्रवोञ्जलियुगेनकर्णाञ्जलिद्वयेन समन्दहासंमन्दस्मितसहितंयथातथापीत्वानिपीय स्थिरभावेनविभावादिभिस्स्वादुतामानीयमानेनरत्याख्यस्थायिभावेनपुष्टाव्याप्तासती यांयादृशींविधांरीतिंकालातिवाहनाक्षमसंभोगसूचिकांस्थितिमित्यर्थःदर्शयिष्यति साविधाऽद्यमेममपुरस्तिष्ठति । उभयत्रसमन्वयःस्पष्टः ॥ २२५ ॥

वसन्ततिलकावृत्तं—उदात्तालङ्कारः ।

त्वत्संश्रिताः कनकसौधतले शयानाः
सच्चन्द्रकान्तकृतकुट्टिमरत्नमञ्चे ।
पश्यन्ति राम न तमः क्व चन क्षपायां
ग्रीष्मेऽपि चण्डकरजं न विदन्ति तापम् ॥

ऋद्धेश्वरितमुदात्तालङ्कारस्तमुदाहरति । त्वदिति । हेरामत्वत्सं-

श्रितास्तवभक्ताः कनकसौधतलेसुवर्णहर्म्यप्रदेशे सद्भिश्श्रेष्ठैश्चन्द्रकान्तैः कृतेकुट्टिमेनिबद्धभुविविरचितेरत्नमञ्चेवज्रादिनवरत्नमयमञ्चे विनिवेशितहंसतूलिकातल्पेशयानास्सन्तः क्वचनकस्यांचिदपिक्षपायांरात्रौ सर्वदाकनकरत्नप्रभामेदुरितत्वात्तमोऽन्धकारंनपश्यन्ति । सदाकुट्टिमचन्द्रकान्तशैत्यनिभृतत्वाद्ग्रीष्मेऽपिचण्डकरजंरविसमुद्भूतंतापंनविदन्तिनजानन्ति । अत्रकनकसौधचन्द्रकान्तकुट्टिमरत्नमञ्चानुभूतिर्महतींसमृद्धिंदर्शयति ॥ २२६ ॥

मन्दाक्रान्तावृतं—उदात्तभेदः ।

यस्यास्तीरे रघुकुलपतिस्स व्यहार्षीन्महात्मा
साकं भ्रात्रा विजितकरणेनापि साध्व्या स्त्रिया च ।
गोदा सा मे नयनपदवीं प्रागुपागात्त्रयस्ते
यत्रावात्सुर्भुवि गतिरभूत्तत्र मे पञ्चवट्याः ॥

उदात्तमृद्धेश्चरितंश्लाघ्यंचान्योपलक्षणम् । श्लाघ्यंचरितमन्यस्याङ्गंचेत्तदप्युदात्तंतदुदाहरति । यस्याइति यस्यागोदायास्तीरे महात्मोदारस्वभावस्सप्रसिद्धोरघुकुलपतीरामो विजितकरणेनजितेन्द्रियेणभ्रात्रापिलक्ष्मणेनच साध्व्यासत्यास्त्रियासीतयाचसाकंसह व्यहार्षीद्विहरतिस्म सा गोदागोदावरी प्राक्पुराकाशीयात्रासमये मेममनयनपदवींनेत्रपथमुपागात्प्राप्तवती । यत्रयस्यां पञ्चवट्याःपञ्चवट्याख्यस्थानस्यभुविप्रदेशे तेत्रयःसीतारामलक्ष्मणाः अवात्सुर्वसन्तिस्म तत्रमेममगतिःरामदर्शनायप्रवेशोऽभूत् । इदंरामादिविहरणनिवासचरितवर्णनंगोदावरीपञ्चवटीप्रशस्त्यङ्गम् ॥

गीतिवृत्तं—अत्युक्तिरलङ्कारः ।

राम तव याचितारः कुर्वन्त्यमरद्रुवच्छ्रितानिभ्यान् ।



अपिच प्रतापवह्निः कुम्भजवच्छुष्कमातनोत्यब्धिम् ॥

अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम् । तामुदाहरति । रामेति । हेरामतवयाचितारोयाचकाःअमरद्रुवत्कल्पकादिदेवतरुवत्श्रितान्स्वाश्रितानिभ्यान्धनिकान्कुर्वन्ति । अपिचतवप्रतापवह्निः कुम्भजवदगस्त्यवदब्धिसमुद्रंशुष्कंनिर्जलमातनोतिकरोति । अत्रपूर्वार्धेऔदार्यात्युक्तिरुत्तरार्धेशौर्यात्युक्तिश्चकथिता ॥ २२८ ॥

आर्यावृत्तं—निरुक्तिरलङ्कारः ।

असि सुमनसामशोकाद्यस्त्रस्सौम्यः कलानिधिर्भास्वान् ।
हेराघव चतुरास्यः श्रीमांश्च त्वं प्रचेताश्च ॥

निरुक्तिर्योगतोनाम्नामन्यार्थत्वप्रकल्पनम् । तामुदाहरत्यसीति । हेराघवत्वंसुमनसांदेवानांवापुष्पाणांवामध्ये अशोकादयःअशोकपुष्पादयोऽस्त्राणियस्यसःअशोकाद्यस्त्रःकामः । नविद्यन्तेशोकादयःसतांदुखादयोयेभ्यस्तानिअशोकादीन्यस्त्राणियस्यतथाभूतश्च । सौम्यः बुधःअक्रूरश्च । कलानिधिश्चन्द्रोविद्यास्पदंच । भास्वान्सूर्यःप्रतापवांश्च । चतुरास्योब्रह्माप्रवक्ताच ॥ श्रीमान् लक्ष्मीपतिःकान्तिमांश्च । प्रचेताःवरुणःप्रकृष्टमनाश्चासि । समन्वयःस्पष्टः

मन्दाक्रान्तावृत्तम्—प्रतिषेधालंकारः ।

नेदं मायिञ्जनकतनयामात्रयुक्तं वनान्तं
जन्यस्थानं रघुवरहरीशादिवीरैस्तु भीष्मम् ।
न स्त्रीचौर्यं कपटयतिना यत्त्वयेदं कृतं प्रा-
गस्त्रैः किंतु प्रतिभयकरैः क्रीडनं पङ्क्तिवक्त्र ॥

प्रतिषेधःप्रसिद्धस्यनिषेधस्यानुकीर्तनम् । निर्ज्ञातोनिषेधस्स्वतोऽनुपयुक्तत्वादर्थान्तरंगर्भीकरोति । तेनचारुत्वान्वितोऽयंप्रतिषे-

धनामालङ्कारस्तमुदाहरति । नेति। हेमायिन्मायाविन्चौर्यादिकपटकार्यकारिन्नित्यर्थः । पङ्क्तिवक्त्रदशमुखेदं जनकेति केवलसीतायुक्तंवनान्तंवनमध्यंन किंतु रघ्विति रामलक्ष्मणसुग्रीवादिमहावीरैर्भीष्मंभयानकंजन्यस्थानंयुद्धरङ्गं । इदंप्राक्पुराकपटयतिनामायाभिक्षुणात्वयायत्स्त्रीचौर्यंकृतंतन्न । किंतुप्रतिभयकरैःमहाभयकृद्भिरस्त्रैःक्रीडनंविहरणम् । इदंयुद्धरङ्गेप्रत्यवतिष्ठमानंरावणंप्रतिकस्यचिद्विदग्धस्यवचनं । तत्रयुद्धस्थानस्ययुद्धस्यचकेवलसीतायुक्तपञ्चवटीवनमध्यत्वाभावःस्त्रीचौर्यत्वाभावश्चनिर्ज्ञातएवकीर्त्यमानस्तत्रैवतवचोरवत्प्रवेशे स्त्रीचौर्यकरणेचप्रागल्भ्यं नयुद्धभूमिप्रवेशेनापियुद्धइत्युपहासंगर्भीकरोति । तच्चमायिन्नित्यनेनकपटयतिनेत्यनेनचआविष्कृतम् ॥ २३० ॥

वसन्ततिलकावृत्तम्—विध्यलङ्कारः ।

हे शस्त्र सर्वजगतां कुशलाय मूर्ध्नः
शीघ्रं दशास्य विलुनीहि दशाननस्य ।
रामस्य बाहुगमसि प्रथितप्रभावं
रक्षःकुलं हतवतस्तव काऽस्ति तन्द्रा ॥

सिद्धस्यैवविधानंयत्तामाहुर्विध्यलङ्कृतिम् । निर्ज्ञातविधानमनुपयुक्तिबाधितंसदर्थान्तरगर्भीकरणेनचारुतरमितितंविध्यलङ्कारमाहुः । तमुदाहरति । हेशस्त्रेति । रावणंसंहर्तुंब्रह्मास्त्रप्रयोगंकुर्वतोरामस्यशस्त्रंप्रत्युक्तिरियम् । हेशस्त्रसर्वजगतांकुशलायक्षेमायास्यदशाननस्यरावणस्यदशमूर्ध्नःशिरांसिशीघ्रंविलुनीहिछिन्धि प्रथितप्रभावंप्रसिद्धशौर्ययुक्तंरक्षःकुलंखरविराधादिराक्षसगणंहतवतस्संहतवतोरामस्यबाहुगंहस्तगतमसि तस्मात्तवकातन्द्राशीघ्रंद-



शमुखदशशिरोलवनेकिमालस्यमस्ति । अत्ररामस्यस्वबाहुगतशस्त्रंप्रतिरामस्यबाहुगमसीतिवचनमनुपयुक्तंसत् रामस्येत्यनेनस्वस्यात्यन्तनिस्तन्द्रक्षःकुलहननपटुत्वंगर्भीकरोति । तच्चप्रथितप्रभावमित्यादिनाविष्कृतम् ॥ २३१ ॥

गीतिःउपजातिश्च—हेत्वलङ्कारः ।

रघुकुलवतंस तावकचरितामृतपूरमाश्रितेष्वेकः ।
कर्णाञ्जलिद्वयेन प्रपिबन्नमितामुपैम्यहं तृप्तिम् ॥
मायामशुद्धामसितुं तदीये कार्येऽनृते सत्यधियं विहन्तुम् ।
ज्ञातुं च तत्वं परसौख्यमाप्तुमलं नृणां राघवभक्तिरेका ॥

हेतोर्हेतमता (कार्येण) सार्धंवर्णनंहेतुरुच्यते । तदुदाहरति । रघ्विति मायामितिच । हेरघुकुलवंतसरघुवंशभूषणराम आश्रितेषुत्वद्भक्तेष्वेकोऽहं तावकंत्वदीयंचरितमेवामृतंतस्यपूरंप्रवाहं कर्णावेवाञ्जलीप्रसृतौकरौ तयोर्द्वयेन प्रकर्षेणपिबन्सन् अमितामसंख्यातांतृप्तिमुपैमिप्राप्नोमि ॥ २३२ ॥ मायामिति । इदंमदीयापदुद्धाररामस्तुतिगतंपद्यं । अशुद्धामनृतजडदुःखात्मत्वेनापूतांमायांसत्वरजस्तमोमयींमूलप्रकृतिमसितुंनिवारयितुं तस्यामायायाइदंतदीयंतदीयेमायासंबन्धिनिअनृतेअसत्येकार्येकार्यप्रपञ्चेसत्यधियंसत्यबुद्धिंविहन्तुंव्यपोहितुं तत्वंपरमात्मयाथार्थ्यंज्ञातुंबोद्धुं परंपरमंसौख्यंमोक्षसुखमाप्तुंच नृणांमानवानामेकाराघवेरामेभक्तिरलंपर्याप्तकारणंभवति । उभयत्रसमन्वयः स्पष्टः ॥ २३३ ॥

शार्दूल···तं स्रग्धराच हेत्वलङ्कारभेदः ।

हव्यं हव्यभुजां हृषीकजयिनां हृद्यः प्रमोदाम्बुधिः
सीताया रमणीयचित्तवसतिर्वंशस्य मुक्ता रघोः ।

दौर्भाग्यं रिपुसंहतेर्मुनिदृशां सौभाग्यसिद्धाञ्जनं
धर्मस्याक्षयमास्पदं शुभखनिश्श्रीरामचन्द्रस्सताम् ॥

मूकश्श्रेष्ठे गुणांस्ते मधुरतरवचोभङ्गिभिः श्रोत्रपुट्या
त्वच्चारित्रामृतानि प्रपिबति बधिरः पश्यति त्वां दृशाऽन्धः ।
पङ्गुस्त्वत्क्षेत्रवीथीष्वटति कुणिरपि त्वां सुमैरर्चतीति
श्रीसीताकान्त यत्सा तव पदयुगलीभक्तिसाम्राज्यलक्ष्मीः ॥

हेतुहेतुमतोरैक्यंहेतुंकेचित्प्रचक्षते । अत्रचकार्यावश्यंभावतच्छैघ्र्यादिप्रत्यायनार्थःकार्यकारणाभेदव्यपदेशः । रूपकेसादृश्याद्भेदव्यपदेशः । इहकार्यकारणभावादितिभेदः । तमुदाहरति । हव्यमिति । मूकइतिच । श्रीरामचन्द्रो हव्यभुजांहविर्भुजांदेवानांहव्यंचरुपुरोडाशादिहविः राक्षसाद्युपद्रवनिवर्तकत्वेनदेवानांहविराप्तिहेतुरित्यर्थः।हृषीकजयिनांविषयेन्द्रियजयशीलानांयोगिनांहृद्योरम्यःप्रमोदाम्बुधिरानन्दसागरः ।सीतायारमणीयचित्तस्यवसतिर्वासस्थानं । यद्वारमणीयस्यचित्तस्यवसतिः । रघोर्वंशःकुलमेववंशोवेणुस्तस्यमुक्तामौक्तिकं रिपूणांसंहतेःसंघस्यदौर्भाग्यंदुष्टदैवं । मुनीनांदृशांनयनानांसौभाग्यंमाङ्गल्यंतज्जनकंसिद्धाञ्जनंसिद्धपुरुषकृताञ्जनविशेषः । धर्मस्यधर्माख्यपुरुषार्थस्यअक्षयमनश्वरमास्पदंस्थानम् । सतांसत्पुरुषाणांभक्तानांशुभखनिर्मङ्गळनिधिरस्ति । अत्रहव्यभुगादीनांहव्यकरत्वादिनाध्यवसितेश्रीरामचन्द्रेतद्धव्यत्वादिव्यपदेशः ॥ २३४ ॥ मूकइति । निरतिशयितरामभक्तिमहिम्नाऽतित्वरितंमूकत्वादिनिवृत्तिंब्रुवन्कविःस्वस्यशीघ्रंबाधिर्यनिवृत्तिमभिप्रैति । हेसीताकान्तमूकःअवागिन्द्रियोऽपित्वद्भक्तिमहिम्नाप्राप्तवागिन्द्रियवैदुष्यः । एवमुत्तरत्रापि । मधुरतराणामत्यन्तरुचिराणांवचसामुक्तीनांभङ्गिभिःपरंपराभिस्तेतवगुणांश्श्रेष्ठेवक्ति । बधिरःकर्णेन्द्रियपाटवरहितः श्रोत्रपुट्याकर्णाञ्जलिनेत्यर्थः तवचारित्राणिचरितान्येवामृतानिप्रकर्षेणपिबति । अन्धस्त्वांदृशानेत्रेणपश्यति । पङ्गुःपादहीनस्तवक्षेत्रवीथीष्वटतिचरति । कुणिःकरहीनोऽपित्वांसुमैःपुष्पैरर्चतिपूजयतीतियत्सा तवपदयुगल्यांपादद्वये या भक्तिः तस्याःसाम्राज्यस्यसार्वभौमत्वस्य लक्ष्मीस्सम्पत् अत्रमूकादिप्रवक्तृत्वकरत्वादिनाऽध्यवसितायांरामभक्तौमूकादिप्रवक्तृत्वादिव्यपदेशः ।



मत्तेभवृत्तं—हेत्वलंकारः ।

द्वारं गृहस्य बहुमत्तेभगण्डतलनिर्यातदानसुरभि
श्रीराजराजमणिकोटीरधार्यतममाज्ञाणुपत्रमनिशम् ।
पीयूषपूररुचिधिक्कारिणी वचनमाधुर्यपीति यदियं
सा मैथिलीशपदपाथोरुहद्वितयसद्भक्तिसंपदमिता ॥

पुनरपिद्वितीयंहेत्वलंकारंस्मृतिपथगतेनमत्तेभवृत्तेनोदाहरति । द्वारमिति । तल्लक्षणन्तु " तोभोयजौसरनगाःपङ्क्तिसूर्ययति मत्तेभमत्रकथित " मिति । गृहस्यद्वारं बहूनांमत्तानामिभानांगजानांगण्डतलेभ्यःकपोलस्थलेभ्योनिर्यातैर्निर्गतैर्दानैर्मदजलैस्सुरभिसुगन्धयुक्तंभवति । आज्ञाणुपत्रंशासननिवेदकाल्पपत्रिका अनिशंसदा श्रीमतांराजराजानांमणिकोटीरैरत्नकिरीटैर्धार्यतमंभृशंधार्यंभवति । वचनानांवचसांमाधुरीमधुरतापि पीयूषपूरस्यामृतप्रवाहस्यरुचिधिक्कारिणीमाधुर्यतिरस्कारिणीभवतिचेतियत् सेयममिताऽसंख्याता मैथिलीशस्यरामस्यपदपाथोरुहयोःपादांबुजयोःद्वितयेद्वयेसत्याः श्रेष्ठायाःभक्तेस्संपल्लक्ष्मीः । अत्रमत्तगजमदगन्धमेदुरगृहद्वारकर-

त्वादिनाऽध्यवसितायांरामभक्तौतादृशगृहद्वारत्वादिव्यपदेशः इत-सर्वेशिवम् ॥ २३५ ॥

त्रिंशत्संख्योपस्कृतपंचसहस्रेषु तिष्यवर्षेषु ।
यातेषु कृता वृत्तालंकृतिरामस्तुतिश्च तद्व्याख्या ॥

इतिश्रीश्वेतारण्यनारायणयज्वनः कृतिषु वृत्तालंकार-
रत्नावली रामस्तुतिः सव्याख्या संपूर्णा

---

## लोकोक्तिसंग्रहः ।

१. अनिक्षुयन्त्रके ग्रामे मधुपुष्पं हि शर्करा । २ प्रकुंच्यापि पथा गम्यम् । ३ सन्दग्धा अपि चिकुराः संजायेरन्किमिङ्गालाः । ४. एकग्रामे द्वावुन्मत्तौ । ५. हिंगुपात्रमपश्यः किं विप्र भिक्षार्थमागत । ६. आत्मशेषे धर्मकृत्यम् । ७. विनायकं प्रकुर्वाणो रचयामास वानरम् । ८. काक्याश्चापि स्वशिशुः स्वर्णम् । ९. नहि वंध्या विजानाति गुर्वीं प्रसववेदनाम् । १०. बलिनस्तृणमायुधम् । ११. स्वयं तरितुमक्षमः किमु परानसौ तारयेत् । १२. पक्षियोग्यो रामशरः । १३. विरतायामपि वृष्टौ नहि शाखानां पृषन्ति विरतानि । १४. सर्वं कार्यं तिष्ठतु वृद्धं कारय सांप्रतमङ्कारूढम् । १५. ज्येष्ठागमनपर्यन्तममा किं हि विलंबते । १६. भिक्षुकपिठरं शनिराविशति । १७. गुणाः पूजास्थानं गुणिषु नच लिंगं नच वयः । १८. पुरुषाधिक्ये पाकाधिक्यम् । १९. प्रणिपातप्रतीकारः संरंभो हि महात्मनाम् । २०. स्यादुष्णीषं शिरसो योग्यम् । २१. हेम्नस्संलक्ष्यते ह्यग्नौ विशुद्धिश्श्यामिकाऽपि वा । २२. लक्ष्म्यागमने बंध्वागमनम् । २३. किमिवहि मधुराणां मण्डनं नाकृतीनाम् । २४. एको मुष्टिग्राहो मूर्खे । २५. क्रोष्टुर्नटनसंपत्तु कर्कटप्राणहानिकृत् । २६. श्रेयांसि बहुविघ्नानि । २७. आलयस्थायिमार्जारो देवताया बिभेति किम् । २८. अनिर्वेदस्सिद्धिमूलम् । २९. क्षीरं सर्पाय दद्याच्चेत्स सर्पो विषमुद्गिरेत् । ३०. सर्वस्सर्वं न जानाति । ३१. विनायकालयं मृज्यान्न तत्रोच्चारमाचरेत् । ३२. उष्णमुष्णेन शाम्यति । ३३. तीक्ष्णत्वापादके वृक्षे तीक्ष्णत्वस्य परीक्षणम् । ३४. अहिपादानहिर्वेत्ति । ३५. एकैकशः शतं किंवा यौगपद्येन किं शतम् । ३६. रत्नहारी तु पार्थिवः । ३७. उत्सृज्य नगरं ग्रामे रत्नानां हि परीक्षणम् । ३८. कामी स्वतां पश्यति । ३९. पतेदाम्रशलाटुः किं मन्त्रे प्रोच्चारिते सति । ४०. सति कुड्ये चित्रकर्म । ४१. शुष्के पिचण्डे भुञ्जीत तुरंगोऽपि पलालकम् । ४२. कोऽतिभारस्समर्थानाम् । ४३. उभयोरजयोस्स्तन्यं पीतवानयमर्भकः । ४४. किंदूरं व्यवसायिनाम् । ४५. तपस्स्थितानां सुलभं हि सर्वम् । ४६. को विदेशः सविद्यानाम् । ४७. सत्स्वर्दनं फलमदौहृदमेव सूते । ४८. कः परः प्रियवादिनाम् । ४९. क्षुधितश्चापि शार्दूलो न कुर्यात्तृणभक्षणम् । ५०. यत्राकृतिस्तत्र गुणाः । ५१. प्रवाहो नूतनः प्रत्नं प्रवाहञ्चाप्यनाशयत् । ५२. दुष्करं किं महात्मनाम् । ५३. स्वसुः पुत्रः स्वपुत्रश्चेत्किमर्थं तपसि श्रमः । ५४. भीताः बिभ्यति सर्वतः । ५५. अश्वः पादेन खंजोऽपि कुलुत्थगिरणे पटुः । ५६. साध्वी ज्येष्ठाऽऽचार्यपत्नी । ५७. पुरश्चूडस्य विप्रस्य शिखा कंपेत किं वृथा । ५८. ज्येष्ठापि भार्या कालोपयोगा । ५९. विश्वप्रसिद्धविप्रस्य किं केशब्रह्मसूत्रकम् । ६०. कूपः खातो भूतो जातः । ६१. द्रष्टुं व्रणं करगतं मुकुरः किमर्थः । ६२. गतयो भिन्नपथा हि देहिनाम् । ६३. अग्निहोत्रस्य च कृषेरपि नास्त्यनुरूपता । ६४. अर्चकदत्तं यत्तत्तीर्थम् । ६५. वटकानां तु गणनं न रन्ध्राणामुदीरितम् । ६६.

वृद्धा नारी पतिव्रता । ६७. श्रेष्ठा भुक्तिश्च सेवा च भेषजस्य त्र्यहं स्मृता । ६८. म्लेच्छवीथ्यां भिक्षुभिक्षा । ६९. ज्ञातुं स्वकं पृष्ठदेशं पाटवं नास्ति कस्यचित् । ७०. अंगुलियोग्यः श्वयथुः । ७१. आकण्ठमपि बन्धुत्वे हस्तं वक्षसि मा क्षिप । ७२. भिक्षा भिक्षोर्नचालाब्वाः । ७३. रासभस्य पुरीषं हि जायते होमसाधनम् । ७४. हिंसितं हिंस्यते पदम् । ७५. मोदके छेदमात्रेऽपि तद्रुचिर्नैव यास्यति । ७६. नाशितं नाश्यते कुलम् । ७७. भाण्डे वक्रत्वमात्रेऽपि किंन पच्येत मोदकम् । ७८. विप्राः पश्चिमबुद्धयः । ७९. सर्षपे सत्यपि स्वल्पे तत्कटुत्वं न गच्छति । ८०. सम्मार्जन्याः पट्टरज्जुः । ८१. प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम् । ८२. बाल्ये रम्यो गर्दभोऽपि। ८३. गृहीत्वा तण्डुलान् ज्येष्ठभगिनीबन्धुता तु का ॥ ८४. एको भेको घटसर्पाणाम् । ८५. विष्णुशाकः पादपणो भरभृत्या त्रिपात्पणा । ८६. उष्ट्रस्यांगं सर्वं वक्रम् । ८७. कूपस्थितस्य भेकस्य का राष्ट्रस्य विचारणा । ८८. कार्पासो वस्त्रमफलत् । ८९. ग्रामं गते कर्षणयोग्यभद्रे तत्रापि तं कर्षणमेव कारयेत् । ९०. नदीप्रवाहे पूर्णेऽपि लीढ्वा पानक्रिया शुनः । ९१. दिनेदिने किं सूपान्नम् । ९२. पितामही शयीत चेद्गृहस्य रक्षिका भवेत् । ९३. स्वापराधं नवेत्ति स्वः । ९४. ताम्रचूडं ताडयितुं महायष्टिः किमिष्यते । ९५. संशयात्मा विनश्यति । ९६. स्थित्वोच्चरेच्चेदाचार्यो धावित्वा शिष्य उच्चरेत् । ९७. संग्रही नावसीदति । ९८. बालैः कृतायास्तु कृषेःफलं किं गृहमाव्रजेत् ९९. दुष्टं चेतः साशंकं स्यात् । १००. यदि वह्निरिति ब्रूयादास्यं पच्येत किन्तदा । १ पुनरायान्महाकपिः । २. किं वार्षिकान्धकारेऽपि कीशः शाखां नलक्षयेत् । ३. मूर्खैर्जल्पो वाचः श्रान्त्यै । ४. नर्तकतनूजं शिक्षयसिनृत्तं । ५. अन्यंनयातिहिविभूतिरपत्यभाजाम् । ६. आर्षोगर्भोनोविलंबेतरात्रौ ।



७. मधुग्राही कूर्परं किंनलिह्यात् । ८. उष्णोदकस्य सेकेन किंदह्येत निकेतनं । ९. कुक्कुरपुच्छं सम्यङ्ननमेत् । १०. ज्येष्ठार्जितं कनिष्ठस्य कटिसूत्राय नाप्यलं । ११. पटाटोपोभयंकरः । १२. बध्वारुदन्शुभे किंनु तूष्णींस्यान्मृतवेश्मनि । १३. गानं मूढश्रोत्रे बाणः । १४. स्वानार्जितस्य स्वर्णस्य शुद्धिर्नच मितिर्नच । १५. किंदुर्मर्षतितिक्ष्णूणाम् । १६. माधुर्यदर्शी मार्जारः प्रतिशिक्यमभिव्रजेत् । १७. किमकार्यमसाधुभिः । रजक्यां रजकस्याशा तस्याआशातुरासभे । १८. विश्वस्याच्चौर्यवन्तं वा न विश्वस्यात्तु वामनम् । १९. किमदेयं वदान्यानाम् । २०. उत्तराभिमुखसौधनिकेतनाद्दक्षिणाभिमुखपर्णकुटी वरा । २१. अप्यतिक्षुल्लकं सर्पं महादण्डेन ताडय । २२. कः परः समदर्शिनाम् । २३. पिपीलिकानां स्पृष्ट्यापि शिलाप्याघर्षिता भवेत् । २४. नहि वाचो दरिद्रता । २५. नदीमीक्षेतचेद्विप्रउत्क्रुश्योत्क्रुश्य वै पतेत् २६. आखुः प्राप्तः खात्वा शैलम् २७. एकाशीतितमालस्यं कोटिभंगाय कल्पते । २८. गतानुगतिको लोकः । २९. नोल्लंघयति सीमानं तिल्लकाननकन्यका । ३०. रसनायास्सिरा कुतः । ३१. पिटकानां सहस्रस्य हन्ता च्छेत्ता भिषक्स्मृतः । ३२. गुलभाण्डं सजेद्दंशः । ३३. कुडवोऽपि नशिष्येत कर्षको गणयेद्यदि । ३४. सवाते धूनयेत्काले । ३५. पानक्रिया यवाग्वातु गण्डूषो हिमनीरतः । ३६. नरद्दश्वा पयोनिधिः । ३७. मौक्तिकं कन्यकापि स्यात्शुल्कं चापि भवेल्लघु । ३८. प्रत्यापणं पुमानेव । ३९. चित्रेप्यनर्हश्चोलीयः । ४०. उत्पादकस्य कुंभानामनेकान्दिवसान्क्रिया । ४१. उद्भेदकस्य कुंभानामेकमेव क्षणं क्रिया । ४२. कृकलासो वृतेःसाक्षी । ४३. पत्रतुंबी निषिद्धाचेद्गृहतुंब्याः किमागतम् । ४४. बन्धुभावो रणे कुतः । ४५. सिद्धमन्नं परित्यज्य भिक्षामटति दुर्मतिः । ४६. यतियात्रा बहिर्वेद्याम् । ४७. हस्तस्थं पायसं मुक्त्वा

कूर्परं लेढि दुर्मतिः। ४८. कंकस्य नासा स्विद्येत ४९. ऋणं गृहीत्वाप्युपवास एव। ५०. निष्कुटौषधिरगौरवास्पदम्। ५१. बिच्छिन्द्यात्कि कण्ठसूत्रं दुःखप्रश्नार्थमागता। ५२. वाग्मी तनूभवो जीवेत्। ५३. यत्र भुङ्क्ते गृहे तत्र द्वैतमिष्येत किंस्वयम्। ५४. निद्रालुवत्सः पुंवत्सः। ५५. केन बन्धयितुं शक्यं कुञ्जरस्यालमल्लकम्। ५६. निःस्पृहस्य तृणंजगत्। ५७. तण्डुलाश्चेद्विकीर्येरन् सहस्रं वायसास्तदा। ५८. अपूर्णः कलशो नृत्येत्। ५९. प्रवेश्य वामनं तोये परिपश्यत्यगाधताम्। ६०. पंचसु द्वे अबल्बजे। ६१. अनिष्टायास्तु भार्यायाःकरस्पर्शेपि दुष्टता। ६२. ज्ञानं भारः क्रियां विना। ६३. लेखिनीं कथयेत्खंजामजानन् लेखनं पुमान्। ६४. गुरोरतिक्रमी शिष्यः। ६५. पाकायैवाभवत्कालःकालो नास्त्यौष्ण्यशान्तये। ६६. वादभ्रष्टो वैद्यश्रेष्ठः। ६७. व्याजभूतं हि खंजस्य वाजिनःस्खलितं स्थलम्। ६८. स्कंधादूर्ध्वं सखा भवेत्। ६९. महिष्यांप्रसवार्तायां महिषो मदनातुरः। ७०. भुक्तिश्रमो दृढस्यापि। ७१. पंचवक्त्रे वने दृष्टे किं चरेयुः परे मृगाः। ७२. चौर्यमभ्यस्य विस्मर। ७३. भित्तिशाकं मेलयित्वा दुर्धीर्वैश्ये निपातय। ७४. भिक्षापात्रं बृहत्पात्रम्। ७५. दह्यमाने गृहे वह्निं धूमपत्राय याचते। ७६. युद्धकार्याय गोग्रहः। ७७. चटकःकिं भवेत्कंको डयमानोप्युपर्यलं। ७८. बालवत्सो न भीतिज्ञः। ७९. आगतावागतौ श्वश्रूरभवद्गर्दभी यथा। ८०. गजस्य भाण्डस्य च साम्यमात्तम्। ८१. यावनालसमुत्पन्ना लाजाः किंकुञ्जरक्षुधः। ८२. मृत्तिकाधनजामातुर्भक्षणं शुष्कगोशकृत्। ८३. प्रतिवादिपदे पातो वरं साक्ष्यंघ्रिपाततः। ८४. प्राप्येऽपि कुट्टने श्लाघ्यं कुट्टनं सोर्मिकैःकरैः। ८५. विश्राणनीयं भिषजे द्रविणं देहि चक्रिणे। ८६. भोजने पुरतस्तिष्ठ पश्चात्तिष्ठ निषेवणे। ८७. जातस्यापि गिरौ धान्यस्यावघात उलूखले। ८८. निरस्तमानवे ग्रामे हयमेधं करोत्ययम्। ८९. विद्वानेव विजानाति विद्वज्जनपरिश्रमम्। ९०. यएव गवां निवर्तने प्रभवति सएव धनञ्जयः। ९१. अयोघनं गिरेदाखुः काकश्चेच्छिशुमुद्धरेत्। ९२. शिलागजाननं दशेत्सदन्तभंगमाप्नुयात्। ९३. न कतकं पंकप्रसादनाय। ९४. पृथुकं स्मृत्वा ह्युलूखलमवहन्ति ९५. मार्गिता लता पादयोः प्रोता। ९६. अखण्डं कूश्माण्डमन्नमध्ये छादयसि ९७. प्राचीने काणे कवाटमपावृणु। ९८. अयमपरो गण्डस्योपरि पिटकोद्भेदः। ९९. दिगंबरदेशे कौपीनवानुन्मत्तः १००. अन्यदुपक्रान्तमन्यदापतितम्। १. न शणसूत्रवानाभ्यासे त्रसरसूत्रवैचित्र्यलाभः २. रत्नाकरेपि क्षारभावः। ३. गिरिं निगीर्णवतो महादेवस्य कवाटमेकं पर्पटम् ४. फलं गलितं पयसि पपात ५, लूतातन्तुना गन्धगजालानसन्दानं ६. सूचीतुण्डेन वज्रमणिभेदः ७. वह्निरेव वह्नेर्भेषजं ८. नहि तरणिकरस्पर्शादन्यो व्याधिरिन्दीवरवनस्य ९. प्रयोगपरतन्त्रा हि कार्यसिद्धिः १८. अलवितुःकट्यामष्टपंचाशल्लवित्राणि ११. गर्हास्पदं हि ग्रामस्य गणेशालयभिक्षुकः १२. पुष्पेण सह सूत्रमपि सुरभि १३. पुरुषविशेषपरिषंगोत्कर्षिण्य एव पुरंध्र्यो भवन्ति १४. ईर्ष्यायितं हि सुन्दरीणां प्रकाशकं प्रेमसर्वस्वस्य १५. न कालहरणक्षमाः प्रियसमागममहोत्सवाः १६. भवितव्यानां द्वाराणि भवन्ति सर्वत्र १७. इक्षुं भक्षयितुमपि भृतिः किं १८. कैतकसंपर्कात्सिचयमपि किमप्यामोदते १९. लोकोभिन्नरुचिः २०. नौरपि शकटमारोहेत् शकटमपि नावमारोहेत् २१. मूकाज्जल्यकश्चण्डप्रचण्डः २२. फलिष्यत्सस्यमंकुरोदये दृश्यम् २३. ष्टष्टताडनेन दन्तभंगो जातः २४. आम्रान्पृष्टः कोविदारानाचष्टे २५. अधः पततोऽपि श्मश्रुणि रेणुर्न मतः। २६. मेयशून्ये हस्ते किं किष्कुमानं २७. तव गृहमागच्छेयं चेत्किं ददासिमे २८.

मम गृहमागच्छेश्चेत्किमानयसि मे २९. यवाग्वामप्याशा श्मश्रुण्यप्याशा ३०. काशीं गतमपि कर्म न मुञ्चेत् ३१. अभिसारिकेति गजमारुह्य गच्छेत् ३२. चौर्यवतीति वीथ्यां गन्तुं शक्नुयात्किं ३३. समुद्रे क्षिप्तमपि कलशं पूरणीयमेव जलं पूरयेत् ३४. नौकावाणिज्यतो जातमृणं किं निवर्तेत कार्पासतन्तुकरणेन ३५. शिवमितवित्तनरस्य भार्या भूत्वा किं द्रोणमितवित्ताशां कर्तुमर्हेत् ३६. अत्यल्पमपि तृणं दन्तनिर्घर्षणार्हम् ३७. गर्दभोपदेशः कर्णमूलमात्रगः ३८. मशकस्य पिटके जाते छेदो दाहो वा कियान् ३९. निम्ने स्थले तिष्ठते जलं ४०. कूपनीरं प्रवाहो नापहरेत् ४१. गोपुरं पाञ्चालिका वा धारयति। ४२. यदि श्वश्रूर्भिन्द्यात्तदा मृद्भाण्डं यदि स्नुषा भिन्द्यात्तदा कांस्यभाण्डं ४३. सतस्ततस्त्रयो मार्गाः द्वौ मार्गावसतस्सतः एकोऽसतोऽसतो मार्गः। ४४. धावन्तं ग्राममनुधावेत् ४५. निर्मितस्य सदनस्य सम्यक्कार्यत्वोक्तिः ४६. जीर्णपर्णराशिमध्यक्षिप्तस्यापि गुञ्जाफलस्य शोभा नापगच्छेत् ४७. जनन्यष्टपदानि क्राम्येच्चेद्वत्सः षोडश पदानि क्राम्येत् ४८. जामात्रे पाचितमन्नं पुत्राय परिवेष्य कुक्षितापमुपागमत् ४९. वृषभ इति भाषमाणमपि पृच्छति वत्साय कुडवमितं क्षीरम् ५०. नद्या योजनदूरेप्यलमल्लकमस्रंसयत् ५१. भिक्षित्वापि भिक्षवे देहि ५२. भिक्षुरपवरके तिष्ठेत् भिक्षुभस्त्रिका रथ्यायां तिष्ठेत् ५३. इक्षवे कृष्टा मृत्तिका किं तप्तस्य क्षीरस्य शर्करा भवेत् ५४. अश्वत्थं प्रदक्षिणीकुर्वाणैव कुक्षिमूलमामृशति। ५५. यवाग्वै स्थितान् तण्डुलान् दत्वा कक्षरोमाण्यवापयत् ५६. आरे आरे त्विति वदन्नरोऽग्नौ किं पतिष्यति ५७. रोगिवागभ्रमारोहेत्किम् ५८. तत्कालकार्यस्य बुद्धिर्न्यूना ५९. जवेन रंगवल्यर्थं पिष्टमादाय विकिर ६०. कोच्यां शिवमरीचिश्चेदत्र किं ६१. तृणानि किमु बध्येरन्गोश्चरन्त्याः विषाणयोः ६२.



आषाढवाते शिलायां डयमानायां शाल्मलीकार्पासः कियान् ६३. उक्त्वा दत्ता वाचा बध्वा दत्तं चान्नं कति दिनानि तिष्ठेताम् ६४. दृष्टारनालं स्थलमद्रिरैशः दृष्टौदनं स्थानममर्त्यपत्तनम्। ६५. भुक्तये समागता देवता ग्रामदेवतां निरकासयत्। ६६. एह्येहीति वनं वक्ति गच्छगच्छेति मन्दिरम्। ६७. बालसिंहोऽपि बध्वा किं चार्येत। ६८. शिलायां वल्कसूत्रमुत्पादयेत् सिकताः रज्जुमापादयेत् खं शरासं मण्डलीकुर्यात्। ६९. बर्हिन्बर्हिन्नित्युक्ते बर्हीं बर्हं दद्यात्किं। ७०. भिक्षुमताडयत डयते स्म कन्था। ७१. भर्ता ताडयति स्म नेत्रमलं नश्यति स्म। ७२. मृतेऽपि पुत्रे स्नुषादौष्ट्यं व्यरमत्। ७३. तिलास्तैलार्थमातपे शोष्यन्ते किमर्थमाखुकरीषाणि। ७४. मातरं दृष्ट्वा दुहितरं निश्चिनु। ७५. अस्मात्तीराददस्तीरं हरितम्। ७६. अजाश्चेत्पारमुत्तरेयुः किमेकमप्यजावत्सलोम वितरेयम् ७७. कर्मारवीथ्यां सूचीविक्रयो वा ७८. कर्मारचुल्यां मक्षिकाः किं सजेयुः ७९. सजलव्ययः कूपः सजलोद्गमः ८०. अंबष्ठसदने रोम्णां न्यूनता किम् ८१. विहाय लाभं किं श्रेष्ठी सरिता सह यास्यति ८२. काकाङ्घ्रीतिमती कंकाङ्घ्रैर्यवती ८३. इक्षुर्मधुरइत्यामूलं खन्येत वा ८४. मर्तुं यास्यतो महोदधिरूरुमात्रः ८५. सांक्रामिकः पिटकः स्पर्शमात्रेण संक्रामेत् ८६. चिक्रोडः शाखायां कूर्मः कूपे ८७. कण्ठरज्जुं विमुच्य वालमधारयः ८८. हस्ते नवनीतं निधाय घृताय चरति ८९. जलावतारे यदि दृश्येत माता तदा सुता सदने किन्नु दृश्या ९०. वृक्षं स्थापितान् जलं सिञ्चेत् ९१. वालमाकंपयेद्गेहे मार्जारोऽपि कृताशने ९२. स्थितं यात्रे दत्वा देवरे भिक्षार्थमरोदीत्। ९३. अग्नौ मन्दाग्निर्महाग्निर्वा ९४. नद्यां पातयन्नपि मित्वा पातयेत् ९५. चलत्सु दन्तेषु निवर्तेत क्षुत् ९६. निरस्तपादपे देशे ह्येरण्डोऽपि द्रुमायते ९७. पितुर्भुक्ति-

पात्रं महानसे न्युब्जम् ९८. सहस्रश्राद्धनाशी सामिग्रामयाजी ९९. जामातेति कथितं तृणमुन्नमेत् १००. कुबेरसदनेऽपि मृन्मय्येव चुल्ली न कनकमयी १. कन्याऽपि स्यात्कमनीया किंचिदपि स्यात्तच्छुल्कम् २. सहस्ररूप्यमूल्यको गजः स्थितो मृतोऽपि वा ३. गौरपि तनीयसी स्यात्पलालमप्यल्पं चरेत् प्रभूतं पयश्च प्रदद्यात् ४. वृश्चिके बालेऽपि तद्विषमबालम् ५. श्मशानवासी संन्यासी किं वेतालादियाद्भयम् ६. प्रातिवेशिके वृद्धिमुपगते पञ्च दिनानि निराहारो भवेत् ७. तालीवनसृगालः किं बिभीयाच्चलचलध्वनेः ८. आगतं शिरसे यातं शिरस्त्राणेन वै सह ९. मूल्यमपि स्वल्पं स्यान्मौक्तिकानि स्युरनल्पानि १०. अनधीते [अधीतेपि] महाभाष्ये व्यर्था सा पदमञ्जरी ।

इति खेतारण्यनारायणयज्वनः कृतिषु लोकोक्तिसंग्रहः पूर्णः

---

## विष्णुनक्षत्रमाला ।

वन्दे नन्दितजिष्णुं घनरोचिष्णुं घनाघमभिभूष्णुम्। निरयं निराकरिष्णुं हृदि वर्तिष्णुं हृतामयं विष्णुम् ॥ १ ॥ वन्दे मन्दिततृष्णं नन्दितकृष्णं नमज्जनानुष्णम् । सततमसाधुमहोष्णं साधुसतृष्णं सकौस्तुभं कृष्णम् ॥ २ ॥ भुवनविमोहनरूपं यदुकुलदीपं यमीशसुप्रापम्। माधवमपास्ततापं मधुरालापं नमामि नतगोपम् ॥ ३ ॥ उत्पादितसुमबाणं जितमुरबाणं कृताखिलत्राणम्। ददतं निष्परिमाणं स्थिरनिर्वाणं भजे रमाप्राणम् ॥ ४ ॥ विदलितविविधसुरारिं विजितवलारिं नमामि नरकारिम् । धृतनन्दकतरवारिं पदसृतवारिं परात्परं शौरिम् ॥ ५ ॥ दीनजनावनदक्षं दीर्णविपक्षं दयाभृतावेक्षम्। दितिभवगजहर्यक्षं देवाध्यक्षं भजे सरोजाक्षम् ॥ ६ ॥ जीर्णं तुलसीपर्णं तूर्णं स्वीकृत्य वेश्म विस्तीर्णम् । पूर्णं धान्यमजीर्णं स्वर्णं कृष्णेन किन्नु न वितीर्णम् ॥ ७ ॥ श्रुतियुवतिचिकुररत्नं कौस्तुभरत्नं जगच्च निर्यत्नम् । दधतं नमतां प्रत्नं चिन्तारत्नं भजामि यदुरत्नम् ॥ ८ ॥ द्वारं कृत्वा पार्थं यस्तत्वार्थं जगौ तमत्यर्थम् । कृष्णमबुध्वा व्यर्थं कालं स्वार्थं नयामि वाऽन्यार्थम् ॥ ९ ॥ सुन्दरपदारविन्दं समनुतिनिन्दं समर्पितानन्दम्। नन्दककरं मुकुन्दं नन्दितनन्दं नमामि गोविन्दम् ॥ १० ॥ कमलां वक्षसि कलयन्कंबुं रचयन् करे शुचं दलयन्। अचलं कुशलं जनयन् अभयं कथयन् पुरोऽस्तु हरिरुदयन् ॥ ११ ॥ प्रभुमवनतजनमोदं प्रकटितवेदं प्रभाजितांभोदम्। करिगिरिशिखरविनोदं कमलाह्लादं कदाऽपि नावेदम् ॥ १२ ॥ अच्युतमधिगतरंगं रमणीयांगं रमाकृतालिंगम्। तल्पितशेषभुजंगं तार्क्ष्यशतांगं भजामि धृतशार्ङ्गम् ॥ १३ ॥ वेंकटशैलावासं वेदश्वासं विपाटितायासम् । नन्दितवेदव्यासं नीरदभासं हरिं भजन्नासम् ॥ १४ ॥ सद्गुणरत्ननिशान्तं सततं भान्तं सतामधिस्वान्तम् । भवगदवैद्यमनन्तं भवुकोदन्तं भजे रमाकान्तम् ॥ १५ ॥ बृन्दावनसंचारी कंसविदारी किरीटिहितकारी । यमुनातीरविहारी कौस्तुभधारी पुरोऽस्तु मधुवैरी ॥ १६ ॥ सुखयतु जगतां कर्ता नमतां भर्ता मुरस्य संहर्ता । चक्रगदादरधर्ता विपदपहर्ता रमाधराभर्ता ॥ १७ ॥ सकलचराचरनेता संपद्दाता समस्तरिपुजेता । सुखयतु भद्रभ्राता सुखसंधाता सुमायुधाधाता ॥ १८ ॥ चंपकवनवास्तव्यं संततभव्यं सुरालिसंभाव्यम् । देवीदक्षिणसव्यं गोपंदिव्यं विहाय किं सेव्यम् ॥ १९ ॥ नरनारायणनामा नवघनधामा निरस्तभवदामा । सुखयतु बदरीधामा सुखितसुदामा सुरेषु सप्रेमा ॥ २० ॥ अवने प्रतिभावन्तं हृदि मणिमन्तं श्रिते दयावन्तम्। भुवने विभूतिमन्तं श्रियि रतिमन्तं भजामि भगवन्तम् ॥ २१ ॥ द्वाराद्ध्वजवत्यां द्वारावत्यां स्थितं प्रभावत्या-

म्। मधुयदुवृष्णिमहत्यां मंगलवत्यां हरिं दधे मत्याम् ॥ २२ ॥ सन्तं
द्वारावत्यां सुकृतवसत्यां जितामरावत्याम् । प्रासादजालवत्यामु-
त्सववत्यां हरिं दधे मत्याम् ॥ २३ ॥ कंबुसहोदरकण्ठं नतभयकुण्ठं
नमामि वैकुण्ठम् । सज्जनलसदुपकण्ठं श्रीवैकुण्ठं श्रितं रमोत्कण्ठ-
म् ॥ २४ ॥ पदरुचिजिताब्जशोभं पद्मालोभं परास्तविक्षोभम् । पा-
टितविमतमहेभं पंकजनाभं प्रणौमि जलदाभम् ॥ २५ ॥ विमलगु-
णप्राग्भारं विश्वाधारं विधेर्विधातारम् । विनुतं विबुधै र्धीरं वीर-
मुदारं विनौमि यदुशूरम् ॥ २६ ॥ प्रतिपादितपुरुषार्थं प्रमुदितपार्थं
प्रकृष्टगुणसार्थम् । प्रभुमच्युतमत्यर्थं प्रास्तानर्थं प्रणौमि तत्वार्थम् ॥
२७ ॥ विष्णोस्तारामालां पठितुरबालां श्रियंच धारालाम् । स्वस्मि-
न् भक्तिमलोलां वचसां विमलां हरिर्दिशेन्मालाम् ॥ २८ ॥

इति श्वेतारण्यनारायणयज्वकृता विष्णुनक्षत्र-
माला संपूर्णा ॥

---

உ

## விக்ஞாபநம்.

எனது வித்யா குருவும், காசியில் பல வருஷகாலம் மஹாதேவாச்ரமி முதலிய பல பெரியவாளிடம் கலைகற்று, பச்சையப்பன் கலாசாலையில் 25 வருஷம் ஸம்ஸ்கிருதா சார்யராக இருந்து எண்ணிறந்த சிஷ்யர்களுக்கு வித்யா தாநம் செய்து, அளவற்ற வியாக்யாநங்களை எழுதி பிர ஸித்திபெற்ற பிரும்மஸ்ரீ அபிநவ வ்யாஸ, ச்வேதாரண்யம் நாராயணயஜ்வா அவர்கள் ஸமீபத்தில் லோகோபகாரமாக சில கிரந்தங்களை வெளியிட்டிருக்கிறார்கள். எல்லோரும் படித்துப் பயன்பெறுமாறு அச்சுச் சிலவை மாத்திரம் வஹிக்க விலை மதிக்க முடியாத இந்நூல்களுக்கு அற்ப விலை வைக்கப்பட்டிருக்கிறது. இதை வாங்கிப்படித்து எல்லோரும் நன்மையுற வேண்டுகிறேன்.

சொந்த வியாக்யாநத்துடன் விருத்தாலங்கார ரத்நாவளி

| | | | | |
|---|---|---|---|---|
| 1. | ராமஸ்துதி | 0 | 8 | 0 |
| 2. | 30 ஸ்துதிகள் | 0 | 8 | 0 |
| 3. | சிவார்த்தாலங்காரஸ்தவ | 0 | 6 | 0 |
| 4. | ரத்நாவளீ வியாக்யா | 0 | 6 | 0 |
| 5. | மகுடாபிஷேக நாடகம் | 0 | 6 | 0 |
| 6. | ஸந்தியாதிகள். | 0 | 4 | 0 |

இவ்விலாஸத்தில் கிடைக்கும்:—

வெ. ஸோமதேவ சர்மா

154, தம்புசெட்டி வீதி, சென்னை.

The Progressive Printers, Madras.